C. 8. 4808
B. 8. 91. 60
K. 8. 98. 59

महानिलेनाग्निमिवापविद्धं
यज्ञावसाने शयने निशान्ते ॥ २९
शरैराचितसर्वाङ्गः शोणितौघपरिप्लुतः ।
विभाति देहः कर्णस्य स्वरश्मिभिरिवांशुमान् ॥ ३०
प्रताप्य सेनामामित्रीं दीप्तैः शरगभस्तिभिः ।
बलिनार्जुनकालेन नीतोऽस्तं कर्णभास्करः ॥ ३१
अस्तं गच्छन्यथादित्यः प्रभामादाय गच्छति ।
एवं जीवितमादाय कर्णस्येषुर्जगाम ह ॥ ३२
अपराह्णे पराह्णस्य सूतपुत्रस्य मारिष ।
छिन्नमञ्जलिकेनाजौ सोत्सेधमपतच्छिरः ॥ ३३
उपर्युपरि सैन्यानां तस्य शत्रोस्तदञ्जसा ।
शिरः कर्णस्य सोत्सेधमिषुः सोऽपाहरद्द्रुतम् ॥ ३४

---

1164* रराज कर्णस्य शिरो निकृत्त-
मस्तं गतं भास्करस्येव बिम्बम् ।

[(L. 1) K4 निकृंतम्; Dn1 निकृत्यम्. — T2 om. line 2. — (L. 2) K4 B5 Da1 D1.3.5 अस्तं गते; B2 T1 G2.3 M1.2 अ(M1 ह्य)स्ते गिरौ; D6 G1 अस्ताद्रिरेर् (for अस्तं गतं).]

— After the above, T2 cont. 1161*, while B2.5 D6 cont. after 1164*:

1165* हतोत्तमाङ्गश्च स तस्य देहः
परिप्लुतः शोणितौघप्रसेकैः ।
रराज कर्णस्य शरावकीर्णः
स्वरश्मिजातावततो यथार्कः ।

[(L. 1) B2.5 कृतो (for हतो). — (L. 2) B2.5 -प्रमुक्तः (for -प्रसेकैः). — (L. 4) B2.5 सुरश्मि- (for स्वरश्मि-).]

B2.5 D6 cont.: Dn1 cont. after 1164*: T2 after 1161*:

1166* प्रताप्य सेनां खलु पाण्डवीं रणे
शरांशुभिः पावकतुल्यदीप्तिभिः ।
किरीटिकालेन तु कर्णभास्करो
व्यनीयतास्तं दिवसावसाने ।

[(L. 1) B2 विष्टभ्य (sic); T2 ततोच्य (sic) (for प्रताप्य). Dn1 T2 स तु पांडवो (for खलु पाण्डवीं). — (L. 2) Dn1 T2 शरांशुभिर्भास्करतुल्यदीधितिः. — (L. 3) B5 किरीटिना तेन (for °टिकालेन). B2 स; Dn1 सु-; T2 हि (for तु). — (L. 4) B2.5 D6 प्रसह्य नीतोस्त(B5 °तः स)-मुदीर्णतेजसा (D6 गिरिं महात्मना).]

On the other hand, T1.2 G M ins. after 29:

1167* तदाननं सूतपुत्रस्य राज-
न्विभ्राजते पद्ममिवापनालम् ।

[(L. 1) G1 सूर्यसुतस्य (for सूतपुत्रस्य). — (L. 2) G1 निपातितं (for विभ्राजते). T1 धर्मन् (for पद्मम्).]

30 a) K3 अर्दित- (for आचित-). M3 -सर्वांगं. — b) K3 शोणितेन (for °तौघ-). M2-4 -परिप्लुतं. — c) S (T3 missing) रराज (for विभाति). T1 G1 M2-4 देहं. — d) B2.5 Da1 D1.5 सुरश्मिभिर्; G2 तस्यांशुभिर् (for स्वरश्मि°). B2.5 om. इव.

31 a) B2 om. प्रताप्य. D6 विष्टभ्य; T1 संताप्य; T2 विष्टाप्य; G1.3 M निष्टप्य (for प्रताप्य). K3 धारित्रीं; B1 अमितां; T1 बहुभिर्; T2 आमित्रां; M1 आमैत्रीं; M2.4 तामैंद्रीं; M3 (*sup. lin.* as in text) तामिंद्रीं (for आमित्रीं). G2 नष्टव्यसनमामित्रिं. — c) T1 अर्जुनेन बलात्काले. — d) Ś K गतोस्तं; Da1 D1.5 नीतोंतं; T1 नितांतं (for नीतोऽस्तं). T1 -भास्करं.

32 a) D3 ग्रस्तं (for अस्तं). G2 M4 गच्छद्. D8 तथा (for यथा). K3 आदित्य; T1 °त्यं. D6 प्रसह्य चांत आदित्यः. — b) K3 प्रभा व्यादाय. — c) Dn1 तथा (for एवं). — d) K2 D8 कर्णस्ते(D8 °से)षुर्. B3-5 Dn1 D2.6 T1.2 G2 M सः (for ह).

33 a) K3.4 D2.4.8 G2 Ca अपराह्ने (for °ह्णे). Ś2 [ऽ]परानस्य (sic); K3 श्रमार्तस्य; B1 °कृत्य; B4 Bom. ed. °ह्नोस्य; D6 पराह्णे च; G2 परांगस्य; Ca. n. v. Madras ed. [ऽ]पराह्णस्य; Cc Cal. ed. [ऽ]पराद्धस्य; Cap पराह्णस्य (as in text). G1 अपराह्णापराह्णे च. ❀Cv: कुन्त्याः कन्यावस्थायां जातत्वात् अपराणि सर्वेभ्योपि बहूनि अहानि दिनानि यस्य सोयमपराह्णः कर्णस्तस्य बहुवयस्कस्येत्यर्थः ।❀ — b) B2.4 (marg.) Da1 Ca श(B2 ग)तपूर्वस्य (for सूतपुत्रस्य). K3 मारिषः; Ca °ष (as in text). — c) B2 छिन्नसंजलिके चैव; M1 छित्त्वै***** जौ. — d) T2 सोच्छ्रायम्; G2 सोत्सधीम्; Cv सोत्सेधम् (as in text). B4 (marg.) अगमत् (for अपतत्). B2 पुनरादाय सायकः. Ca सोच्छेधमपतस्थिरः (corrupt).

34 a) T1 सेनां तां; T2 G3 M1 सेनानां; G2 M2-4 सेनायां (for सैन्यानां). D6 यत्र पांडुबलव्योम्नि. Cv as in text. — b) K4 तदंजसाः; V1 B1 तदांजसा; Dn1 तदंजसां; B2 ततोंजसा. D9 दिवाकर इवापतत्; T1 G2.3 विनिघ्नन्निहितं (T1 °न्नहितं) जनं; G1 विनिघ्नन्वितराञ्जनान्; M विनिघ्नन्नितरं (M1 °रतं) जनं. — c) K2 सोत्सेधे; D4 सोत्स्येधम्; T2 M2 चोत्सेधम् (for सो°). — d) B1.4 D3.7 इषुणापा(B1 °प्रा)हरद् (for इषुः सोऽपा°). K2 सौराहरद्; B2.5 Dn1 सोप्यह°; D2 सोपह°; D4 आपह°; D6 तदह° (for सोऽपाह°). S (T3 missing) इषुस्तदहरद्रणे. — After 34, D6 S (T3 missing) ins.:

संजय उवाच ।
कर्णं तु शूरं पतितं पृथिव्यां
शराचितं शोणितदिग्धगात्रम् ।
दृष्ट्वा शयानं भुवि मद्रराज-
श्छिन्नध्वजेनापययौ रथेन ॥ ३५
कर्णे हते कुरवः प्राद्रवन्त
भयार्दिता गाढविद्धाश्च संख्ये ।
अवेक्षमाणा मुहुरर्जुनस्य
ध्वजं महान्तं वपुषा ज्वलन्तम् ॥ ३६
सहस्रनेत्रप्रतिमानकर्मणः
सहस्रपत्रप्रतिमाननं शुभम् ।
सहस्ररश्मिर्दिनसंक्षये यथा
तथापतत्तस्य शिरो वसुंधराम् ॥ ३७

C. 8. 4817
B. 8. 91. 67
K. 8. 98. 71

इति श्रीमहाभारते कर्णपर्वणि सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

1168* तच्छिरो भरतश्रेष्ठ शोभयामास मेदिनीम् ।
यदृच्छया महाराज आदित्य इव गां गतः ।
तं दृष्ट्वा समरविमर्दलब्ध नद्धं
दष्टोष्ठं रुधिरपरीतकातराक्षम् ।
राधेयं रथवरपृष्ठसंनिषण्णं [5]
हीनांशुर्दिवसकरो मुहूर्तमासीत् ।
निःशब्दतूर्यं हतयौधमुख्य
प्रशान्तदर्पं धृतराष्ट्रसैन्यम् ।
न शोभते सूर्यसुतेन हीनं
वृन्दं ग्रहाणामिव चन्द्रहीनम् । [10]

[(L. 2) D6 G1.3 यदृच्छयेव पतितं मंडलं चंड(G1 तिग्म-; G3 चंद्र)दीधितेः. — (L. 3) D6 -वद्धनिधिं (for -लब्धनिद्धं). — (L. 4) T2 रुधिरपराहतकातराक्षं; M °परीतकेक(M3 °त)-राक्षं. — (L. 5) D6 राधेयं रथमभिवद्धपुः संनिषण्णं; T2 राधेयं स्वरथवित्तमंद्युहीनं; M1 राधेयं रथवरपृष्ठसंनिषण्णु. — (L. 7) D6 हतयोधवीर्यं; T2 °वीरयोधं; G1.3 °योधमुख्यं; M °यौधवीरं (M1 °र). — (L. 9) M1 सुतसुतेन (for सूर्य°). — (L. 10) D6 सुराणाम् (for ग्रहाणाम्). G3 सूर्यहीनं (for चन्द्र°). T2 न शोभंते सूर्यपुत्रेण हीनं.]

35 Cf. 8. 68. 3^ab; 6^cd. S (T3 missing) om. 35. — ^a) D6 दृष्ट्वा (for शूरं). — ^b) Ś2 शिराचितं. — ^d) Ś K1.2.4 [उ]पययौ; K3 प्रययौ; B1.3 Dn1 D2.4.7 [अ]थ ययौ; B5 [अ]पि ययौ (for [अ]पययौ).

36 ^a) K3 V1 B Da1 Dn1 D1-3.5.7.8 हते कर्णे (by transp.); K4 कर्णे मृते; D4 हते तु कर्णे. — ^b) D4 च (for तु). — ^c) Ś2 K3.4 B1 Da1 Dn1 D1 अवेक्ष्य(B1 °क्ष्य)माणा; K1 D4 अवेक्षमाना (for °णा). — ^d) K4 वपुला (for °षा). — For 36, D6 subst.:

1169* हते तु कर्णे कुरवः प्राद्रवन्त भयार्दिताः ।
गाढविद्धाश्च संख्ये ते बाणैर्गाण्डीवधन्वना ।
अवेक्षमाणाः पार्थस्य ध्वजं भीषणवानरम् ।
प्रतीपसैन्यहन्तारं प्राद्रवंस्ते दिशो दश ।

On the other hand, S (T3 missing) (which reads it after 8.68.6) subst. for 36:

1170* कर्णे हते पार्थभयात्प्रदुद्रुवु-
र्वैकर्तने धार्तराष्ट्राः सशल्याः ।
अवेक्षमाणा मुहुरर्जुनस्य
केतुं महान्तं यशसा ज्वलन्तम् ।

[G2 om. lines 1-2. — (L. 1) T1 कौरवस- (for पार्थभयात्). T2 हते कर्णे विद्रुता वै महारथा. — (L. 3) M अपेक्षमाणा. — (L. 4) T1 कपिना (for यशसा).]

— After the above, S (T3 missing) cont. 1176*.

37 ^a) Ś2 K4 -प्रतिमाण-; B1 °मस्य; D6 °मेन; T1 °नेन (for °मान-). D6 पातितं; T1 कर्मणा; T2 -कर्णं (for -कर्मणः). — ^b) K3 B2-5 Da1 D1.2.4-8 T2 सहस्रनेत्र-; G1 °रश्मि-; G2.3 °रश्मेः (for °पत्र-). K3 -प्रतिमं मुखं शुभं; B5 D6 -प्रतिमं तदाननं (for -प्रतिमाननं शुभम्). — ^c) D6 T1.2 G2.3 M दिवसक्षये (for दिनसंक्षये). — ^d) M1 ततो (for तथा). D8 [अ]वदत्; M1 पतं (for [अ]पतत्). K1.3 V1 B D S कर्णशिरो (for तस्य शिरो). D4 धरायां; D6 धरातले (for वसुंधराम्). — After 37, D6 T1 G ins.:

1171* व्यूढोरस्कं कमलनयनं तप्तहेमावभासं
कर्णं दृष्ट्वा भुवि निपतितं पार्थबाणाभितप्तम् ।
पांसुग्रस्तं मलिनमसकृत्पुत्रमन्वीक्षमाणो
मन्दं मन्दं व्रजति सविता मन्दिरं मन्दरश्मिः ।

[(L. 1) D6 कमलवदनं. T1 दीप्त- (for तप्त-). — (L. 2) G1 पुत्रं (for कर्णं). — (L. 3) G1 कर्णम् (for पुत्रम्). T1 G1 उद्वीक्षमाणो (for अन्वी°). — (L. 4) G3 मंदरं (for मन्दिरं). D6 मंदरश्मेः.]

Colophon missing in T3. — *Day of Karṇa's Generalship:* Ś K1.2.4 द्वितीये (Ś2 K1 °य-) युद्धदिवसे. — *Adhy. name:* Ś K V1 B D (except D6) T1.2 G1.2 कर्णवधः; M1 द्वैरथे कर्णवधः. — *Adhy. no.* (figures, words or both): Ś1 (*sec. m.*) 80; Ś2 67 (as in text); K1 68; B1 D3 89; B3 76; B4 99; B5 92; Da1 101; D4 71; T1 M1 109; T2 100; G1 107; G2.3 M2-4 108.

C. 8. subst.
B. 8. 92. 1
K. 8. 89. 6

# ६८

संजय उवाच ।
शल्यस्तु कर्णार्जुनयोर्विमर्दे
बलानि दृष्ट्वा मृदितानि बाणैः ।
दुर्योधनं यान्तमवेक्षमाणो
संदर्शयन्भारत युद्धभूमिम् ॥ १
निपातितस्यन्दनवाजिनागं
दृष्ट्वा बलं तद्धतसूतपुत्रम् ।
दुर्योधनोऽश्रुप्रतिपूर्णनेत्रो
मुहुर्मुहुर्न्यश्वसदार्तरूपः ॥ २
कर्णं तु शूरं पतितं पृथिव्यां
शराचितं शोणितदिग्धगात्रम् ।
यदृच्छया सूर्यमिवावनिस्थं
दिदृक्षवः संपरिवार्य तस्थुः ॥ ३
प्रहृष्टवित्रस्तविषण्णविस्मृता-

## 68

☞ $T_3$ is missing in this adhy. (cf. v. l. 8.60.32).
1 Ś K $D_{2.3}$ repeat $1^{ab}$ after 6. — $^{b}$) $B_5$ $D_{4.5}$ निहतानि बाणैः; $D_6$ $T_1$ $G_1$ विपुलध्वजानि; $T_2$ $G_{2.3}$ M मृ- ($T_2$ मु)दितध्वजानि (for मृदितानि बाणैः). $D_2$ (first time) भूयः (for बाणैः). — $^{c}$) $K_2$ $D_2$ यातुम् (for यान्तम्). Ś $K_{1-3}$ अवेक्षमाणं ($K_3$ °ण). — $^{d}$) Ś $K_{1-3}$ $D_{2.5}$ संदर्शयन् ($K_1$ °यं). $B_{3.5}$ $Da_1$ $D_3$ ददर्श तां युद्धभूमिं सुघोरां. — For $1^{cd}$, $D_4$ subst.:

1172* निपातिते चाधिरथौ महारथे
ध्वज* ये सोमकपाण्डवैश्च ।

while $D_6$ S ($T_3$ missing) subst. for $1^{cd}$:

1173* ययौ स तेनैव रथेन तूर्णं
हेलीकृतः सृञ्जयसोमकैश्च ।

[(L. 1) $G_3$ कर्णं (for तूर्णं). $D_6$ स व्रीडयन्; $T_1$ G हेळीकृतः.]
On the other hand, $B_{1.2.4}$ $D_{3.7}$ subst. for 1:

1174* शल्यस्तु कर्णे निहते किरीटिना
त्रस्तं बलं प्रसमीक्ष्यार्तरूपम् ।
ययौ हते चाधिरथौ पदानुगे
रथेन संच्छिन्नपरिच्छदेन ।

[(L. 2) $D_3$ [आ]त्तं (for [आ]र्तं-). — (L. 3) $B_2$ चाधिरथे.]
2 $^{a}$) Ś$_2$ निपातत-; $K_4$ $B_1$ $D_4$ °तितं; $Da_1$ $D_{1.5}$ निपातितः (for °तित-). $D_3$ -वाजिनागान् (for °नागं). — $^{b}$) $K_4$ उद्धत-; $B_{1.4.5}$ $D_{3.7}$ निहतं (for तद्धत-). $B_{2.3}$ $Da_1$ $Dn_1$ $D_{1.5.6}$ S ($T_3$ missing) बलं च दृष्ट्वा हत- ($B_2$ निहतं)सूतपुत्रं. — After $2^{ab}$, S ($T_3$ missing) reads $7^{ab}$, and $D_6$ S ($T_3$ missing) read $2^{cd}$ after 1176*. — $^{c}$) $D_2$ दुर्योधनं; $D_4$ मद्राधिपो. $K_2$ [ऽ]स्रु-; $K_4$ तु (for ऽश्रु-). $B_{1.2}$ $Dn_1$ $D_{3.6.7}$ -परिपूर्ण- (for -प्रति°). — $^{d}$) $K_4$ $B_4$ निश्वसद्; $B_2$ न्यस्यसद्; $B_5$ न्यश्वसंश्च; $D_3$ निःश्वसद् (for न्यश्व°). $K_1$ भ्रांतरूपः; $K_2$ भ्रातु° (for मार्त°). $K_3$ मुहुर्मुहुर्दुःपश्च सदा पतंतं (sic); $Dn_1$ $D_{3.7}$ S ($T_3$ missing) दीनो मुहुर्निश्वसन्ना($Dn_1$ $T_2$ °संश्चा-; $D_2$ °सदा)र्तरूपः; $D_4$ मुहूर्तं *श्वसदार्तरूपः. — After 2, Ś K $Da_1$ $Dn_1$ $D_{1.2.5.8}$ ins.:

1175* धृतराष्ट्र उवाच ।
कथं नु कर्णार्जुनयोर्विमर्दे
दग्धस्य रौद्रेऽहनि विद्रुतस्य ।
बभूव रूपं कुरुसृञ्जयानां
बलस्य बाणोन्मथितस्य संख्ये ।

[Cf. lines 1–4 of App. I (No. 43). — (L. 1) $K_{1.3}$ $Da_1$ $Dn_1$ $D_{2.5.8}$ तु (for नु). — (L. 2) $K_2$ दुग्धस्य. $K_3$ रौद्रे*ति (for रौद्रेऽहनि). Ca cites रौद्रा. Ś $D_2$ विश्रुतस्य (for विद्रु°). — (L. 3) $K_4$ -श्रंजयानां; $D_2$ -संज° (for -सृञ्ज°). — (L. 4) $K_3$ बाणोर्मथितस्य; $K_4$ बाणैर्मथि°; $Da_1$ बाणोन्मथिते च; $D_2$ बाणैर्मथिते* (for बाणोन्मथितस्य). $Da_1$ $D_2$ कर्णे (for संख्ये). $K_3$ बलेन बाणोन्मथितेन कर्णे.]
3 Cf. 8. 67. $35^{ab}$. $D_4$ om. 3. Before 3, Ś K $Da_1$ $D_{1.2.5}$ ins. संजय उवाच; $B_3$ धृतराष्ट्र उवाच. — $^{a}$) Ś$_2$ कथं (for कर्णं). $Da_1$ पृथिव्या. — $^{b}$) Ś$_2$ शराचितः; $T_1$ $G_2$ °चिंतं (for °चितं). — $^{c}$) Ś$_2$ $K_4$ सूर्यं (for सूर्यम्). Ś $K_{2.4}$ अवनिस्थो; $D_2$ °तस्थं; $D_6$ S ($T_3$ missing) °निं गतं (for °निस्थं). — $^{d}$) $K_4$ दिदृच्छवः (for °क्षवः). $D_3$ सूर्यमिवाव-; $G_1$ ते परिवार्य (for संपरि°).
4 $^{a}$) $Da_1$ $D_4$ प्रकृष्ट- (for प्रहृष्ट-). $V_1$ $D_6$ $G_1$ -विध्वस्त-; $Da_1$ $D_1$ -विभ्रष्ट-; $D_5$ -वित्रष्ट-; $M_{2-4}$ -वित्रस्त- (for -वित्रस्त-). Cc cites वित्रस्ता. $K_2$ -विषाग्ल- (sic); $K_3$ -सुखाश्च (for -विषण्ण-). Cc cites विषण्णा. $K_3$ $V_1$ B D S ($T_3$ missing) -विस्मितास् (for -विस्मृतास्). — $^{b}$) $G_1$ तत्रापरे (for तथा°). $V_1$ B (except $B_5$) $Da_1$ $D_{1.3.5.7}$ -परायणा; $Dn_1$ $D_3$ -हता इव; $D_6$ S ($T_3$ missing) -समन्विता (for -गता इव). — Ś $K_{1.2.4}$ $D_3$ om. (hapl.) $4^{cd}$. $D_5$ repeats $4^{cd}$ after 5. — $^{c}$) $G_3$ पदे (for

स्तथापरे शोकगता इवाभवन् ।
परे त्वदीयाश्च परस्परेण
यथा यथैषां प्रकृतिस्तथाभवन् ॥ ४
प्रविद्धवर्माभरणाम्बरायुधं
धनंजयेनाभिहतं हतौजसम् ।
निशम्य कर्णं कुरवः प्रदुद्रुवु-
र्हतर्षभा गाव इवाकुलाकुलाः ॥ ५
कृत्वा विमर्दं भृशमर्जुनेन
कर्णं हतं केसरिणेव नागम् ।
दृष्ट्वा शयानं भुवि मद्रराजो
भीतोऽपसर्पत्सरथः सुशीघ्रम् ॥ ६
मद्राधिपश्चापि विमूढचेता-

C. 8. 4827
B. 8. 92. 9
K. 8. 99. 10

परे). D5 (second time) त्वदीयाच्. K3 V1 B Da1 D1-4. 5 (both times). 7 च परस्परं जना (K3 तदा; D2 तथा); D6 S (T3 missing) च रणे विशां पते (for च परस्परेण). — d) D6 यथावशेषं; T1 G3 यथा यथेष्टं; G1 यथा तथैषां. T1 प्रततास्; G1. 2 पृतनास् (for प्रकृतिस्). B2 यथा (for तथा). V1 B1-4 Da1 D1. 3. 7 T2 G1 M तथा; D5 om.; D6 G3 गता; T1 गताः; G2 युता (for [अ]-भवन्). ❀ Ca: यथा यथा हर्षशोकादिमयी प्रकृतिस्तथा तथा परे त्वदीयाश्चाभवन्। ❀

5 a) Ś1 K2 प्रवि॰-; K1 तं विद्ध-; K3 प्रभ्रष्ट-; B5 सविद्ध-; D2. 6 M1 प्रवृद्ध- (for प्रविद्ध-). V1 -धर्मांतरणांबरायुधं; B1. 4 Da1 D1. 3-5. 7 -वर्माभरणांबरायुधा; D6 T2 G3 °णायुधांबरं; D8 °णांतरायुधं; G1 °णायुधांतरं; G2 °णायुतांबरं (for °णाम्बरायुधं). — b) K3 युद्धे जवेन (for धनंजयेन). B1 अभिहता; D8 °हितं (for °हतं). K1. 3 B3-5 Dn1 D8 महौजसं; V1 B1. 2 Da1 D1-3. 5. 7 महौजसा (for हतौजसम्). D4 धनंजयेनाप्रतिमौजसा तदा; D6 S (T3 missing) °येन प्रह(G1 °हृ)तं महारथं. — c) K3 Dn1 D6 T2 G3 M निशाम्य; B2 विशल्य; G2 निहत्य (for निशम्य). V1 कर्णः; D8 सर्वे; T1 G2 चैनं (for कर्णं). — d) K3 [आ]कुला यथा; B5 Dn1 [अ]जने वने; D4 [अ]भवंस्तदा; Co [आ]-कुलाकुलाः (as in text). D6 S (T3 missing) हत(D6 मह)र्षभं केसरिणेव गोकुलं. — After 5, D5 repeats 4cd. K4 V1 B Da1 Dn1 D1. 3. 4. 6. 7 ins. after 5: D5 after the repetition of 4cd: S (T3 missing) after 1170*:

1176* भीमश्च भीमेन महास्वनेन
नादं कृत्वा रोदसी कम्पयानः ।
आस्फोटयन्वल्गते नृत्यते च
हते कर्णे त्रासयन्धार्तराष्ट्रान् ।
तथैव राजन्सोमकाः सृञ्जयाश्च [5]
शङ्खान्दध्मुः सस्वजुश्चापि सर्वे ।
परस्परं क्षत्रिया हृष्टरूपाः
सूतात्मजे निहते वै तदानीम् ।

[(L. 1) T2 G2 तु (for च). B1 महाश्रमेण; B2 °सुरेण; B3. 5 °स्वरेण; Dn1 D6 तदा स्वनेन; D4 गदास्वनेन; S (T3 missing) तदा स्वरेण (for महास्वनेन). — (L. 2) B2 कृत्वा नादं (by transp.); B3 कृत्वा नादः. B5 कंपयित्वा (for °यानः). D6 S (T3 missing) समुन्नदद्रो(G2 M1 °श्रो)दसी (T1 G2 °सि) कंपयंश्च. — D6 om. line 3. — (L. 3) Da1 D1. 5 आस्फोटते (for °यन्). K4 D3. 7 हसते (for वल्गते). K4 कंपते च; B5 स प्रनृत्यन् (for नृत्यते च). S (T3 missing) आस्फोटयन्नृत्यति वल्गते च (G2 °तेव; M °नेन). — (L. 4) G2 च कर्णे (for कर्णे). G1. 2 द्रावयन् (for त्रास°). — (L. 5) T1. 2 G2 तथा (for तथैव). B4 Da1 D1. 3. 7 सोमक-; T2 मद्रकाः. K4 संजयश्; Dn1 संजयाश्; D4 पांडवाश्. B3 D6 G1. 3 M तथा राजन्संजयाः सोमकाश्च. — (L. 6) K4 V1 B2 Da1 D1. 3. 5. 7 सस्वजुश्चैव; B4 °जिरे च; D6 °नश्चापि; G1 °नुश्चापि (for °जुश्चापि). — (L. 7) K4 क्षत्रियान्. — (L. 8) B5 वैकर्तने; D3 सुतात्मजे. B2. 3 Da1 Dn1 D1. 4. 6 G1 वै निहते (by transp.); D5 विनिहते.]

— After the above, D6 S (T3 missing) read 2cd.

6 a) B5 दृष्ट्वा (for कृत्वा). B3 च युद्धं; D4 तु युद्धं; T2 [अ]रिमर्दं (for वि°). — b) K4 केशरिणेव. V1 B Da1 Dn1 D1. 3-5. 7 कर्णो हतः (Da1 D1. 5 °वः) केस(B1 D3. 4 °श)रिणेव नागः. — After 6ab, V1 B Da1 Dn1 D1. 3-5. 7 ins.:

1177* तीर्णा प्रतिज्ञा पुरुषर्षभेण
वैरस्यान्तं गतवांश्चापि पार्थः ।

[(L. 1) Da1 D4 पुरुषर्षभेन. — (L. 2) V1 B1. 2. 4 Da1 D1. 3. 5. 7 चैव (for चापि). D1 पार्थं.]

— V1 B (except B5) D (except D2. 3) G2 om. 6cd. With 6cd, Cf. 8. 67. 35cd. — c) T1. 2 G1. 3 M युधि (for भुवि). — d) D2 सरथाच् (for सरथः). K1 D3 स-; D2 च (for सु). T1. 2 G1. 3 M छिन्नध्वजेनापययौ रथेन. — After 6, Ś K D2. 3 repeat 1ab and S (T3 missing) ins. 1170*.

7 Ś K D2. 3 om. 7ab. S (T3 missing) read 7ab after 2ab. — a) B1 मद्राधिपतिश्च. V1 B (except B5) Da1 D3. 5. 7 चैव (for चापि). G1 विमूढचेता. — b) Dn1 [अ]पकृति-; Bom. ed. °कृत- (for °हृत-). D6 S (T3 missing) तूर्णं ध्वजेनापहृ(D6 °नोपहृ-; T2 °नोपह)-तेन तेन. — c) Dn1 D4 राजन्; D3 दीनः (for शीघ्रं). D6 S (T3 missing) रथेन दुर्योधनमेत्य तूर्णं (M2-4 शल्यः).

C. 8. 4827
B. 8. 92.9
K. 8. 99.10

स्तूर्णं रथेनापहृतध्वजेन ।
दुर्योधनस्यान्तिकमेत्य शीघ्रं
संभाष्य दुःखार्तमुवाच वाक्यम् ॥ ७
विशीर्णनागाश्वरथप्रवीरं
बलं त्वदीयं यमराष्ट्रकल्पम् ।
अन्योन्यमासाद्य हतं महद्भि-
र्नराश्वनागैर्गिरिकूटकल्पैः ॥ ८
नैतादृशं भारत युद्धमासी-
द्यथाद्य कर्णार्जुनयोर्बभूव ।
ग्रस्तौ हि कर्णेन समेत्य कृष्णा-
वन्ये च सर्वे तव शत्रवो ये ॥ ९
दैवं तु यत्तत्स्ववशं प्रवृत्तं
तत्पाण्डवान्पाति हिनस्ति चास्मान् ।
तवार्थसिद्ध्यर्थकरा हि सर्वे
प्रसह्य वीरा निहता द्विषद्भिः ॥ १०
कुबेरवैवस्वतवासवानां
तुल्यप्रभावाम्बुपतेश्च वीराः ।
वीर्येण शौर्येण बलेन चैव
तैस्तैश्च युक्ता विपुलैर्गुणौघैः ॥ ११
अवध्यकल्पा निहता नरेन्द्रा-
स्तवार्थकामा युधि पाण्डवेयैः ।
तन्मा शुचो भारत दिष्टमेत-
त्पर्यायसिद्धिर्न सदास्ति सिद्धिः ॥ १२
एतद्वचो मद्रपतेर्निशम्य

— d) B3 प्रभास्य (for संभाष्य). Ś1 दुःखात्तम्; K1.2 दुःखांतम्; K3 V1 B Da1 D1.3.5.7.8 दुःखार्तं (for °र्तम्). Dn1 D4 स बाष्प(D3 आभाष्य)दुःखाद्वचनं बभाषे; D6 पश्यन्दुःखादश्रु मुमोच राजन्; S (T3 missing) पश्यन्सु- (T2 °श्रास्सु-; M3.4 °श्यन्स )दुःखार्तमुवाच राजन्.

8 Before 8, D2 ins. शल्य उवाच. — a) D2 om.; T2 विकीर्णं-; M4 उदीर्णं- (for विशीर्णं-). D2 -पश्यत्यश्व- (for -नागाश्व-). D6 -प्रगल्भं (for -प्रवीरं). — c) K3 V1 B1.2.4 D2–4.6–8 S (T3 missing) हतैर् (for हतं). B3 सुहृद्भिर्; D6 S (T3 missing) शयानैर् (for महद्भिर्). — d) B3 नरैस्तथेति; T2 नराश्च नागैर्.

9 a) Da1 D1.5 न तादृशं; D6 नैतत्समं. D2 अतीव युद्धं तुमुलमभूत. — b) Dn1 D8 तु; D2 om.; D6 S (T3 missing) हि (for [अ]द्य). — c) K3 *तौ हि; D6 भास्तौ हि; T2 ग्रस्तौ च; G2 त्रस्ता हि (for ग्रस्तौ हि). — d) D6 G3 अन्ये हि; G1 अन्येपि (for अन्ये च). K3 शत्रवा ये; V1 °चोपि; D6 शत्रुयोधाः; D7 शात्रवो ये; T1.2 G M2–4 शात्रवा ये; M1 शात्रवेयाः (for शत्रवो ये).

10 a) V1 B (except B5) Da1 D1.3.5.7 यत्तत्; M1 तत्तत् (for यत्तत्). V1 स्ववश-; B4 स्वबलं; T1 G3 त्ववशे; G1 स्ववशे M त्ववश- (for स्ववशं). Dn1 दैवं ध्रुवं पार्थवशात्प्रवृत्तं; D6 दैवं तु यत्स्ववशेन प्रवृत्तं; T2 दैवं तु यत्तस्य वशे प्र°; G2 दैवं त्वदद्य त्ववशे प्र°. — b) Dn1 D5.6.8 यत् (for तत्). Ś2 K1.4 B6 D6 S (T3 missing) निहंति; K2 नो हंति (for हिनस्ति). D2 तत्पांडवा जयहिता*स्मान्. — c) K3 तत्रार्थ-; D8 यत्पार्थ (for तवार्थ-). Ś2 K3 -सिद्धार्थकरा; B2–5 -सिद्धौ (B5 °ध्यै) निरता; D2 -संसिद्धिकरा (for -सिध्यर्थ°). B3.5 प्रवीराः; Dn1 तु सर्वे (for हि सर्वे). — d) B3 सर्वे (for वीरा). G2 निषता (for निहता). K3 प्रसह्य वीराणि हताधि षद्भिः (sic).

11 a) K2 -वैवस्वत-. — b) G3 -प्रभो वा (for -प्रभावा). D2 om. from वीरा up to बलेन (in 11c). K3 नृपतेश्च वीराः; Dn1 नृपते सुवीराः; D2.6 S (T3 missing) वरुणस्य चापि (D2 चैव) (for [अ]म्बुपतेश्च वीराः). — c) B4 आर्येण शौर्येण; B5 शौर्येण वीर्येण (by transp.). Cc cites आर्येण (for वीर्येण). Dn1 बलेन तेजसा; D6 S (T3 missing) पराक्रमेण; D8 बलेन दैवं (for °न चैव). — d) D5 ते तैश्च; D6 तैश्चापि D7 तैस्तैः प्र- (for तैस्तैश्च). B1.2 D7 मुक्ता (for युक्ता). V1 Dn1 विविधैर्; B5 D2.6 T1 G2.3 M विमलैर्; T2 विनतैर्, G1 ह्यमलैर् (for विपुलैर्). K3 गणौघैः.

12 a) Da1 D1 निहतान् D6 न रुद्रास् (for नरेन्द्राम्). — b) D6 ते पार्थ- (for तवार्थ-). B5 -कामाद् (for -कामा). — c) K3 V1 B2–5 Dn1 D1.3.4.8 T1 G2 M1 तान्मा शुचो; T2 अस्मासु नो. — d) K1 D6 पर्यायसिद्धं; Dn1 °श्चसत्वं; G3 °यसिद्धं; Ca °यसिद्धिर् (as in text). Cc cites पर्यायः. D6 तु दिष्ट-; तु नित्य-; T2 G2 M हि नित्य- (for सदास्ति).

13 Before 13, D2 ins. संजय उवाच. D7 reads 13 on marg. — a) D6 T2 G1 स तद् (for एतद्). — b) K1 स्वं चापनीतं; B4 स्वं चापनीतं; Da1 D1.5 मुंजाप°; D6 स्वां चापि नीतं; T1 स्वयं विनातं; T2 स्वस्यापनीतं; G2 स्वं चावनीतं (for स्वं चाप°). B2 T1.2 G M2–4 विचिंत्य; D6 निशम्य; M1 [अ]नुचिंत्य (for निरीक्ष्य). — c) Cf. 2c. D6 S (T3 missing) दुर्योधनोश्रुप्रति(D6 °परि)पूर्णनेत्रो. — d) Cf. 2d. K3 B6 D2.4 निश्वसद् (for न्य°). D6

स्वं चापनीतं मनसा निरीक्ष्य ।
दुर्योधनो दीनमना विसंज्ञः
पुनः पुनर्न्यश्वसदार्तरूपः ॥ १३
तं ध्यानमूकं कृपणं भृशार्त-
मार्तायनिर्दीनमुवाच वाक्यम् ।
पश्येदमुग्रं नरवाजिनागै-
रायोधनं वीरहतैः प्रपन्नम् ॥ १४
महीधराभैः पतितैर्महागजैः
सकृत्प्रविद्धैः शरविद्धमर्मभिः ।
तैर्विह्वलद्भिश्च गतासुभिश्च
प्रध्वस्तयन्त्रायुधवर्मयोधैः ॥ १५
वज्रापविद्धैरिव चाचलेन्द्रै-
र्विभिन्नपाषाणमृगद्रुमौषधैः ।
प्रविद्धघण्टाङ्कुशतोमरध्वजैः
सहेममालै रुधिरौघसंप्लुतैः ॥ १६
शरावभिन्नैः पतितैश्च वाजिभिः
श्वसद्भिरन्यैः क्षतजं वमद्भिः ।
दीनैः स्तनद्भिः परिवृत्तनेत्रै-

C. 8. 4899
B. - 94 5
K. r. 99. 20

---

G1 मुहुर्मुहुर्निश्वसदार्त्त(G1 °र्तं)रूपः; T1.2 G2.3 दीनाननो (G2 °द्धीनो; G3 °र्दितो) निश्वसन्नार्तरूपः. — V1 B Da1 Dn1 D1.3–5.7 ins. an addl. colophon after 13; K4 after 14ab. [*Adhy. name:* B3 दुर्योधनानुतापः.—*Adhy. no.:* B1 9; B5 93; Da1 102; D4 72.]

— After the addl. colophon, K4 V1 B Da1 Dn1 D1.3–5.7 ins. a passage given in App. I (No. 43).

— After the above, K4 V1 B Da1 Dn1 D1.3–5.7 ins.:

संजय उवाच ।

1178* दृष्ट्वा तु सैन्यं विनिवर्त्यमानं
पुत्रेण ते मद्रपतिस्तदानीम् ।
संत्रस्तरूपः परिमूढचेता
दुर्योधनं वाक्यमिदं बभाषे ।

[B2 om. the ref. — (L. 1) K4 D4 विनिवर्तमानं; V1 Dn1 परिवृत्य°; Da1 D1.5 विनिषण्ण° (for °वर्त्य°). — (L. 3) B1–4 D3.7 संत्रस्तरूपं; B5 संतप्तरूपः. Da1 D1.5 परिमूढभावो (for °चेता).]

14 V1 B Da1 Dn1 D1.3–5.7 om. 14ab. — a) D3 -रूपं (for -मूकं). Ś1 K1 D2.3 भृशार्थम्. — b) Ś2 K4 आर्तायणिर्. T1 G M राजन् (for वाक्यम्). — After 14ab, K4 ins. an addl. colophon. Before 14cd, K4 V1 B Da1 Dn1 D1.3.4 (marg.).5.7 M2.4 ins. शल्य उवाच. — c) D3 M1.3 [ए]नम्; D6 [ए]तम्; T2 [ए]तद् (for [इ]दम्). D6 G1 M3 उग्रैर् (for उग्रं). M1 -योधैर् (for -नागैर्). — d) D4 आजोधनं. Dn1 -शतैः; D4 -हणैः; D5 -हतः; G2 -हते; M3 -गतैः (for -हतैः). Ś2 सुपूर्णः; K1.3 V1 B D T1.2 G1.3 M सुपूर्णं; G2 तु कर्णे (for प्रपन्नम्).

15 a) K4 महागणैः; Dn1 D6 S च नागैः (for महागजैः). — b) K3 V1 Da1 D1–5.7.8 प्रभिन्नैः (for प्रविद्धैः). V1 D2 -भिन्नम(D2 °व)र्मभिः (for -विद्ध°). Dn1 T1.2 G1 M सकृत्प्रभिन्नैः (T1 °सक्तैः; G1 °यत्तैः) शरभिन्नदेहैः (G1 °गात्रैः); D6 सकृत्प्रयत्नैः गतभिन्नगात्रैः; G2.3 महीं प्रपन्नैः शरभिन्नदेहैः. — c) B2 D4 तैर्विद्र-वद्भिश्च; Da1 D1.5 तैर्विज्वल°; Dn1 संविह्वल°; D2 तैर्त्रिजल°; D6 S (T3 missing) प्रविह्वल° (for तैर्विह्वल°). D6 गत-प्रयत्नैः; T2 ततास्रमृद्भिः (for गतासुभिश्च). B1 3–5 D3.7 तैर्विद्रवद्भिश्च समंततो वै. — d) K3 प्रध्वस्तचित्रायुधवर्मयानैः; V1 °चर्मायुधवर्मयोधैः; B D2.3.7.8 °वर्मायुधयोधमुख्यैः (D3 °वर्मयोधैः); Da1 Dn1 D1.5.6 S (T3 missing) प्रध्वस्त(T2 °ध्वंस)वर्मायुधसर्वयोधैः (Da1 D1.5 °चर्मयोधैः; Dn1 °चर्मखड्गैः).

16 a) Da1 D1.5 वज्रावरुद्धैर्; D4 वज्रेण विद्धैर्; D6 T1.2 M यंत्रापविद्धैर् (for वज्रा°). K4 चापलेंद्रैर्; B3 Dn1 T1 चाचलोत्तमैर्; D6 T2 G M चाच(M1 °प)लौघैर् (for °लेन्द्रैर्). — b) D6 G1 विषण्ण- (for विभिन्न-). K3 -सम-; V1 B Da1 Dn1 D1.3.5.7 -महा-; T2 -मृद-; G3 -वर- (for -मृग-). B2 D6 S (T3 missing) -द्रुमौ(T2 -द्विमो)-घैः (for -द्रुमौषधैः). — c) Ś K1.2.4 D2 प्रवृद्ध-; Da1 D1.5 प्रभिन्न- (for प्रविद्ध-). G1 -वर्माङ्कुश- (for -घण्टाङ्कुश-). K3 तोमरोघैः; D3 -तोमरध्वजः (for °ध्वजैः). — d) K3 -वर्णैः; K4 -माली; V1 B D (except D3) S (T3 missing) -जालै (for -मालै). B2 -संहतैः; D2.6 T1.2 G3 M -संप्लवैः; G2 -पुप्लवैः (for -संप्लुतैः).

17 a) B2 शरप्रभिन्नैः; D2 शरार्धभिन्नैः; G1.3 °भि-(G3 °व)नुन्नैः; M1 °भिपन्नैः (for °वभिन्नैः). B2 चरंगमैः; B5 च वादिभिः; Dn1 S (T3 missing) तुरंगमैः; D2 तु वाजिभिः; D6 तुरंगैः (for च वाजिभिः). — b) K3 स्वसद्भिर्; B1 श्वर°; T1.2 G2.3 M स्तन° (for श्वस°). V1 B Da1 Dn1 D1.3.5.7 T1.2 G2.3 M आर्तैः (for अन्यैः). B2 सततं (for क्षतजं). K1 वसद्भिः; T3 स्रवद्भिः (for वम°). D3 स्वसिद्भरन्यक्षतजं वमद्भिः (sic); D6 स्तनद्भिरार्तैर्विविधैर्ज्वलद्भिः; G1 नदद्भिरार्तैर्विवशैर्ज्वलद्भिः. — B5 om

C. 8. 4890
B. 8. 94. 5
K. 8. 99. 20

मेहीं दशद्भिः कृपणं नदद्भिः ॥ १७
तथापविद्धैर्गजवाजियोधै-
र्मन्दासुभिश्चैव गतासुभिश्च ।
नराश्वनागैश्च रथैश्च मर्दितै-
र्मही महावैतरणीव दुर्दशा ॥ १८
गजैर्निकृत्तापरहस्तगात्रै-
रुद्वेपमानैः पतितैः पृथिव्याम् ।
यशस्विभिर्नागरथाश्वयोधिभिः
पदातिभिश्चाभिमुखैर्हतैः परैः ।
विशीर्णवर्माभरणाम्बरायुधै-
र्वृता निशान्तैरिव पावकैर्मही ॥ १९
शरप्रहाराभिहतैर्महाबलै-

$17^{cd}$. $D_4$ om. (hapl.) from $17^c$ up to line 1 of 1180*. — $^c$) $K_3$ $V_1$ B ($B_5$ om.) D ((except $D_6$; $D_4$ om.) S (except $G_1$; $T_3$ missing) दीनं ($D_{1.7}$ °न-) (for दीनैः). $K_3$ स्वसद्भिः; $D_6$ स्ववद्भिः; $D_8$ $T_2$ स्वनद्भिः; $G_1$ त्रसद्भिः (for स्तनद्भिः). $D_8$ om. (hapl.) from परि up to दशद्भिः (in $17^d$). $Ś_2$ परिरेंद्र-; $K_3$ °वृत्य; $T_1$ प्रविवृत्त- (for परि°). — $^d$) $D_{1.5}$ $M_1$ मही (for महीं). $M_1$ om. from दशद्भिः up to निकृत्ता (in $19^a$). $D_6$ मंहीयमद्भिः क्षतजैर्बभूव; $T_1$ G $M_{2-4}$ मही नद($G_2$ पत)द्भिः कृपणा ($M_{2-4}$ °णं) बभूव; $T_2$ महीं नमद्भिः कृपणां बभूव.

18 $D_4$ $M_1$ om. 18 (cf. v. l. 17). — $^a$) $K_3$ शरापविद्धैर्; $B_4$ $D_{3.7}$ अथाप° (for तथाप°). $G_2$ $M_{2-4}$ -यौधैर् (for -योधैर्). — After $18^a$, N (except $D_6$; $D_4$ om.) ins.:

1179* बलापविद्धै रथवीरसंघैः ।

[$Ś_2$ बलापिविद्धै; $K_4$ भल्लाप°; $V_1$ विलाप° (for बलाप°). $V_1$ रथवीरसंहैः; $B_2$ गजवाजिसिंहैः; $D_{a1}$ $D_5$ रथयोधसंघैः (for रथवीर°).]

— $^b$) $K_1$ ममासुभिश्च; $K_4$ $D_2$ ममांशु° ($D_2$ °सु°); $T_2$ पदाति° (for मन्दासु°). $T_1$ $G_{2.3}$ चापि (for चैव). $D_{n1}$ om. from गतासु up to मर्दितै (in $^c$). — $^c$) $D_{2.3}$ विमर्दितैर् (for च म°). $D_6$ $T_2$ $G_1$ नरैश्च नागैश्च रथै($T_2$ हयै)श्च तुरगैर्; $T_1$ $G_{2.3}$ M ($M_1$ om.) रथैश्च नागैस्तुरगै($M_{2-4}$ °श्च नरै)श्च तुरगैर्. — $^d$) $D_6$ $G_1$ अश्वैर्मही (for मही महा-). $K_2$ सुदृशा; $K_{3.4}$ $D_{1.3}$ दुर्दृशा; $V_1$ $D_{n1}$ $D_6$ $T_2$ G M ($M_1$ om.) भाति; $D_2$ दर्शसा (for दुर्दशा). $T_1$ मही महान्त्रावरणावभाति.

19 $D_4$ om. $19^{ab}$ (cf. v. l. 17); $M_1$ om. up to निकृत्ता (cf. v. l. 17). — $^a$) $K_1$ गणैर् (for गजैर्). $K_3$ निकृंतावर-; $K_4$ निकृंतापर-; $V_1$ $D_{a1}$ $D_{1.5.8}$ $T_{1.2}$ $M_{2-4}$ निकृ($M_3$ °वृ)त्तावर-; $B_{1.3-5}$ $D_{3.7}$ °त्तायत- ($B_1$ न-); $B_2$ °त्ताधवं-; $D_{n1}$ °त्तैर्नर-; Bom. ed. °त्तैर्वर- (for °त्तापर-). $D_{n1}$ -हस्तिगात्रैर्; $D_6$ $T_{1.2}$ $G_1$ M -गात्रहस्तैर् (for -हस्तगात्रैर्). — $^b$) $K_{1.2.4}$ $D_{a1}$ $D_{1.5}$ तद्वेपमानैः; $D_2$ उद्वेष्ट° (for उद्वेप°). — Ś K $V_1$ B $D_{a1}$ $D_{n1}$ $D_{1-3.5.7.8}$ ins. after $19^{ab}$; $D_4$ after $17^{ab}$:

1180* विशीर्णदन्तैः क्षतजं वमद्भिः
स्फुरद्भिरार्तैः करुणं रणाजिरे ।
सुयोधवर्मायुधपादगोसृभिः
प्रकीर्णतूणीरपताककेतुभिः ।
सुवर्णजालावततैर्भृशाहतै-  [5]
र्मही वियद्द्यौर्जलदैरिवावृता ।

[$D_4$ om. line 1. — (L. 1) $K_1$ $D_8$ (before corr.) क्षतजैर् (for °जं). $K_1$ वसद्भिः — (L. 2) $K_1$ आंतैः; $K_3$ आत्तैः; $D_5$ आर्तिः (for आर्तैः). $K_3$ करणं; $D_4$ कुरूणां (for करुणं). $K_3$ $B_{2.3}$ $D_{a1}$ $D_{1.2.5.8}$ रणाजिरं; $B_5$ $D_{n1}$ नदद्भिः (for रणाजिरे). — (L. 3) $K_1$ $B_{1.3.4}$ $D_{a1}$ $D_{1.3-5.7.8}$ सयोध-; $B_5$ सुवर्ण-; $D_2$ स्वयोध- (for सुयोध-). $K_3$ -गोत्रभिः; $D_{a1}$ -गोतृभिः (for -गोसृभिः). $D_{n1}$ निकृत्तचक्रेषु युगैः स योक्तृभिः. — (L. 4) $K_3$ विशीर्ण-; $B_2$ $D_{n1}$ प्रविद्ध-; $B_5$ $D_8$ विकीर्ण- ($D_8$ °र्य-) (for प्रकीर्ण-). — (L. 5) $K_4$ $D_4$ भृशं हतैर्. — After line 5, $K_3$ $D_8$ ins.:

1181* संयंतृयोधाचरणैर्महागजैः ।

[$D_8$ सयंनृयोधा- (sic.)]

— (L. 6) $K_1$ मही वियद्ध्यां; $K_3$ $V_1$ B $D_{a1}$ $D_{1.3.5}$ मही बभौ द्यौर्; $D_{n1}$ महारथैर्धैर्; $D_7$ मही बलौघैर्; $D_8$ महीभवद्यौः (for मही वियद्यौर्). $D_2$ जलजैर्; $D_8$ सलिलैर् (for जलदैर्). $D_2$ आवृतं.]

— $^c$) $Ś_2$ $K_{1.3.4}$ $V_1$ $D_{a1}$ $D_{1.4.5.8}$ -वराश्व- (for -रथाश्व-). $D_6$ S ($T_3$ missing) रथ($D_6$ मह)षैर्नागवराश्वयो($G_2$ M °यौ)धैः. — $^d$) $K_4$ $D_4$ चाति-; $G_2$ चापि (for चाभि-). $K_2$ वृतैः परैः; $K_3$ $D_8$ पराहतैः; $B_{1.2.4}$ हतैः शरैः; $G_{1.3}$ परैः हतैः (by transp.); $M_3$ हतैश्च. — $^e$) $Ś_1$ $K_{2.4}$ -वर्णाभरणांबरायुधैर्; $K_1$ $T_1$ $G_{2.3}$ -वर्माभरणायुधांबरैर्; $D_6$ °णांबरस्थैर्; $D_8$ °युधवस्त्रभूषणैर्. — $B_{1.3.4}$ $D_{3.4.7}$ om. $19^f$. — $^f$) $D_6$ युता; $G_2$ वृतां (for वृता). $V_1$ $B_5$ $D_{a1}$ $D_{n1}$ $D_{1.2.5}$ S ($T_3$ missing) प्रशांतैर्; $D_4$ श्मशानैर् (for निशान्तैर्). $B_2$ च्युतान्युशाल्मैरिव पावकैर्मही (sic).

20 Before 20, $T_1$ ins. संजयः. — $^a$) $T_2$ महारथैर् (for °बलैर्). — $^b$) $B_{1.2.4.5}$ $D_{a1}$ $D_{6.8}$ $T_2$ G M

रवेक्ष्यमाणैः पतितैः सहस्रशः ।
प्रनष्टसंज्ञैः पुनरुच्छ्वसद्भि-
र्मही बभूवानुगतैरिवाग्निभिः ।
दिवश्च्युतैर्भूरतिदीप्तिमद्भि-
र्नक्तं ग्रहैर्द्यौरमलेव दीप्तैः ॥ २०
शरास्तु कर्णार्जुनबाहुमुक्ता
विदार्य नागाश्वमनुष्यदेहान् ।
प्राणान्निरस्याशु महीमतीयु-
र्महोरगा वासमिवाभितोऽग्रैः ॥ २१
हतैर्मनुष्याश्वगजैश्च संख्ये
शरावभिन्नैश्च रथैर्बभूव ।
धनंजयस्याधिरथेश्च मार्गे
गजैरगम्या वसुधातिदुर्गा ॥ २२
रथैर्वरैरुन्मथितैश्च योधैः
संस्यूतसूताश्वत्रायुधध्वजैः ।
विशीर्णशस्त्रैर्विनिकृत्तबन्धुरै-

C. 8. 4808
B. 8. 94. 14
K. 8. 99. 27

अवेक्षमाणैः (G2 °णा); T1 अवेक्ष्यमाणा (for °माणैः). D6 विरलैः (for पतितैः). S (T3 missing) समंततः (for सहस्रशः). — Dn1 transp. 20cd and 20ef. — c) Ś K1.2 B1 T1.2 G1 प्रणष्टसंज्ञैः; D6 प्रनष्टशब्दैः; G2 प्रणष्टदेहैः (for प्रनष्टसंज्ञैः). D6 S (T3 missing) आ(अ)श्वसद्भिर् (for उच्छ्व°). — d) D6 om. बभूवानुगतैरिवाग्निभिः. K3 B5 [अ]सुगतैर् (for [अ]नु°). Dn1 D2 अर्चिभिः (for अग्निभिः). D4 मही बभूवाग्निपरीतगात्रा; D7 मही बभौ वायुगतैरिवाग्निभिः; S (T3 missing) मही बभौ कुंभगतैरिवाग्नि(T2 °ह्नि)भिः. — After 20cd, N (except D6) ins.:

1182* कर्णार्जुनाभ्यां शरभिन्नगात्रै-
हतैः प्रवीरः कुरुसृञ्जयानाम् ।

[(L. 2) V1 B1-3.5 D1.5.7.8 हत-; B4 मही (for हतैः).] — e) K3 दिवश्च्युतैर्; K4 दिवच्युतैर्; D4 विराजते; D6 रक्तैश्च्युतैर्; T1 G3 M2-4 रक्तै°; T2 रक्तैस्तु तैर्; G2 रक्तैच्युतैर्; M1 रत्नच्युतैर् (for दिवश्च्युतैर्). K1 द्युति; Da1 D5 अभि- (for अति-). K1.2.4 Da1 Dn1 D1.5 -दीप्तमद्भिर् (for -दीप्ति°). B3 बभूव तैरप्यतिदीप्तिमद्भिर्; G1 रक्तैश्च्युतैर्भू-मिरदीप्तिमद्भिः. — f) K3 अमलेव दीप्तिभिः; V1 B1.3 Da1 D1.3.5 °लैश्च दीप्तैः; B2.4.5 Dn1 D2.7 °लप्रदीप्तैः; T1 अमरैरिवाबभौ; T2 अतुलैर्विभाति; G1 अमलेव भाति; G2 M2-4 °लैर्विभाति; G3 विमलैर्विभाति; M1 अमरैर्विभाति (for °लेव दीप्तैः). D4 वज्राहतैर्दीप्तवलैर्हि दैत्यैः; D6 रक्तग्रहैर्दुर्विमलैर्विभाति.

21 a) Ś1 K1.2.4 वराश्च-; Ś2 वारश्च-; B1.3.4 D3.7 शराश्च; D2 घोराश्च-; D4 शरास्त्र-; D8 शरैस्तु (for शरास्तु). D4 -कर्णायुत- (for °र्जुन-). Ś K1.2.4 -बाणभिन्नैर्; K3 V1 B1.3-5 Da1 D1.3.7.8 -बाहु(B5 D3 °ण)मुक्ता; B1 -बाहुरुत्वना; D2 -बाणनैर् (sic); D6 G1 -चापमुक्ता (G1 °का) (for -बाहुमुक्ता). — D6 om. 21b. — b) Ś2 K3.3 नागाश्च; K1 D3 नागांश्च (for नागाश्व-). G2 -नागान् (for -देहान्). — c) K3 [अ]थ (for [आ]शु). K3 ययावापुर्; B1.3.4 D7 व्यतीयुर्; B2 समीयुर्; B5 Dn1 D2.5.6 S (T3 missing) प्रतीयुर् (for अ°). D4 निपेतुरस्याशु महीमतीव. — d) K3 B1-4 D2-4.7.8 S (T3 missing) [अ]भिताग्राः (D4 °ग्रः); K4 °तोग्रैः (sic); V1 °तास्रैः; B5 Da1 D1.5 [अ]तिताग्राः; Dn1 [अ]भिनम्राः; D6 °तजाः (for °तोऽग्रैः).

22 a) Dn1 हते; T2 M2-4 हयैर् (for हतैर्). K4 Da1 मनुष्याश्च; D6 T2 G M °व्यैश्च (for °व्याश्व-). K3 रथैश्; D2 -गणैश्; G1 गजाश् (for -गजैश्). V1 B3 Da1 D1.3.5.7.8 असंख्यैः; B5 अनेकैः; G2.3 च संधे (G3 °धैः); M च संख्ये. T1 हतैर्मनुष्याश्वगजाश्वसंधैः. — b) B3 Dn1 शरापविद्धैश् (for °वभिन्नैश्). Dn1 च रथैर्नरैश्; D4 च रथैर्गजैश्च; D6 T1.2 G1.3 M रुधिर(D6 G1 °रैः)प्रदिग्धैः (T1 °दीप्तैः) (for च रथैर्बभूव). B1 om. (hapl.) from बभूव up to रथै (in 22e). G2 शरावसंधैरुधिरः प्रदिग्धैः (sic). — c) D1 [अ]धिरथश्; T2 G1.2 [अ]तिरथेश् (for [आ]धि°). V1 B (except B5) Dn1 D3.7 T1.2 च मार्गणैर्; D2 च मार्गो; D4 च मिश्रैर्; G1 च संख्ये (for च मार्गे). D6 धनंजयश्चातिरथिश्च संधे. — D2 om. 22d-23c. — d) Da1 D1.5 नरैर्; D6 S (T3 missing) हतैर् (for गजैर्). D4 अनम्या (for अगम्या). K3 [अ]तिदुर्गाः; V1 B1-3 D3.4.7 M1 °दुर्गमा (B2 °माः); T2 °दुर्गमं; G2 हि दुर्गा (for [अ]तिदुर्गा). Dn1 अगम्यरूपा वसुधा बभूव.

23 D2 om. 23abc (cf. v. l. 22). — a) K3 रथैर्वरिष्ठोन्मथितैः; D4 परस्परैरुन्म°; D6 S (except T1; T3 missing) रथैर्महे(M1 °नरै)रुन्मथितैः (for °वरैरुन्म°). K3 V1 D6 सुयोधैः; B1.3.4 Da1 D1.3.5.7 सयोधैः; B3 स योधैः; B5 सघोषैः; Dn1 सुकल्पैः; D6 T1 G M सु(G3 स)-कल्पितैः; T2 सुवीतैः (for च योधैः). — b) K1 D1.5 सस्यूतसूताश्व-; K3 संसस° (sic); Da1 संस्कृत°; D6 T1 G M1 सनागयो(T1 G2 M1 °यौ)धाश्व-; D3 संजातसूताश्व-; T2 ससूतयोधाश्व-; M2-4 प्रभग्नयौधाश्व- (for संस्यूतसूताश्व-). D8 -रथानन- (for -वरायुध-). — c) D3 G2 M4 विकीर्ण-

C. 8. 4908
B. 8. 94. 14
K. 8. 99. 27

निकृत्तचक्राक्षयुगत्रिवेणुभिः ॥ २३

विमुक्तयन्त्रैर्निहतैरयस्मयै-
र्हतानुषङ्गैर्विनिषङ्गबन्धुरैः ।
प्रभग्ननीडैर्मणिहेममण्डितैः
स्तृता मही द्यौरिव शारदैर्घनैः ॥ २४

विकृष्यमाणैर्जवनैरलंकृतै-
र्हतेश्वरैराजिरथैः सुकल्पितैः ।
मनुष्यमातङ्गरथाश्वराशिभि-
र्द्रुतं व्रजन्तो बहुधा विचूर्णिताः ॥ २५

सहेमपट्टाः परिघाः परश्वधाः
कडङ्गरायोमुसलानि पट्टिशाः ।
पेतुश्च खड्गा विमला विकोशा
गदाश्च जाम्बूनदपट्टबद्धाः ॥ २६

चापानि रुक्माङ्गदभूषणानि
शराश्च कार्तस्वरचित्रपुङ्खाः ।
ऋष्टयश्च पीता विमला विकोशाः

---

(for विशीर्ण-). Dn1 D8 S (T3 missing) -योक्त्रैर् (for -शङ्खैर्). Ś1 K3 B2.3.5 D1.7 विनिकृत्य; D4.6 S (T3 missing) °कीर्ण- (for °कृत्त-). K3 -शूरैर्; V1 B5 Dn1 T1.2 G2.3 -बंधनैर्; D4 -चामरैर् (for -बन्धुरैर्) — D4 om. 25d. — d) K3 निकृत्य; D2.5 निकृंत- (for निकृत्त-).

24 a) K3 -यान्त्रैर्; V1 B1.3.4 Da1 D1.3.5.7 -चक्रैर्; B2 Dn1 T1 -शङ्खैर्; B5 -पत्रैर्; D4 corrupt; G2.3 -योक्त्रैश् (for -यन्त्रैर्). K3 V1 B1.3.4 Da1 D1.3.5.7.8 विहतैर्; Dn1 T1.2 G2.3 M च तथा; D6 G1 च रथैर् (for निहतैर्). K3 Da1 D1.5 अपस्करैर्; V1 भयस्करैर्; B D2–8 G1 उपस्करैर्; Dn1 व्युपस्करैर्; T1 विमुक्तकैर्; T1 M1 [अ]-प्यवस्करैर्; G2.3 विमस्तकैर्; M2–4 व्यवस्करैर् (for अयस्मयैर्). — b) Ś2 K1.2 B5 T1 G3 M2–4 हृ(K1 ह्र)तानुषंगैर्; K3 B1.3 Da1 Dn1 D1–7 हतानुकर्षैर्; K4 °संधैर्; V1 B3 हृतानुकर्षैर्; B2 कृतात्मकर्षैर्; D8 दूतानुकर्षैर्; G1 कृतानुषंगैर्; M1 वृता° (for हता°). V1 विनियुक्त-; D6 °बंध-; G1 °बद्ध- (for °षङ्ग-). K3 -बंधिभिः; V1 B3.5 Dn1 D2–4.7.8 T1.2 G2.3 M -बंधनैः; Da1 D1.5 -धन्वनैः; D6 G1 -कूबरैः (for -बन्धुरैः). — c) D6 G1 प्रभिन्न- (for प्रभग्न-). V1 D6 -नीलैर्; G M -नीळैर् (for -नीडैर्). K3 -कुंडलैर्; V1 B1 Dn1 D6 S (T3 missing) -भूषितैस्; D2 -बंधनैर् (for -मण्डितैस्). — d) K3 महीर्; D2 भृता; D4 सृता; D6 G1 तदा; D8 मही; T1 G2 वृता; T2 स्तुता; G3 विना (for स्तृता). K3 D3 बभौ (for मही). K4 सारदैर्. D7 T1 वनैः (for घनैः).

25 a) B5 D3.7 निकृष्यमाणैर्; D6 निषज्यमाना; S (T3 missing) नि(T2 वि)कृष्यमाणा (for विकृष्यमाणैर्). K3 D3 जघनैर्; D4 घवनैर् (sic) (for जवनैर्). V1 B (except B5) Da1 Dn1 D1–3.5–7 S (T3 missing) तुरंगमैर्; D4 अलंकृता (for °कृतैर्). — b) K3 हतैश्च शूरैर्; G1 हतेश्वरा (for °श्वरैर्). Ś1 राजो रजः (sic); K2 आजरजः; K3 नागर-थैः; K4 आजिरजः; V1 B Da1 Dn1 D1–3.5.7.8 आजरथैः (for आजि°). D6 रथैश्च नानाजवनैः सुकल्पितैः; T1.2 G2.3 M हतेश्वरा राजि(T2 वै सु-; G3 राज)रथाः सुकल्पिताः. — c) D4 धनूंषि- (for मनुष्य-). K2 -रथांब-; T2 -वराश्व- (for -रथाश्व-). B2 -पत्तिभिर्; D8 -वाजिभिर्; S (T3 missing) -सादिषु (for -राशिभिर्). — d) T1.2 द्रुतं. Ś2 K1 व्रजंतं; K3 व्रजद्भिर्; D8 वियद्भिर्; G2 विचिंत्यो (for व्रजन्तो). K3 B1.3.4 D8 वसुधा (for बहुधा). Ś K1.2.4 D2 विचूर्णितैः; K3 B1 D6.8 G2 विघूर्णिताः (K3 B1 °ता); Dn1 विचूर्णता (for °र्णिताः).

26 a) Dn1 lacuna for परश्वधाः. D2 सहेमपट्टैः परिघैः परश्वधैः; D6 S (T3 missing) सहेमपृष्ठाः स(T1.2 °पट्टाः स; M1–4 °पृष्ठासि)परश्वधा(G3 °था)युधाः. — b) Ś K3 D8 कडंगरायोमुसु(D8 °श)लानि; K3 परस्वधायोमुश°; K4 करंडरायोमुश°; V1 B1–4 Da1 D1.3.5.7 शि(B1 सि)ताश्च शूला मुस(V1 °श-; B1.2 °ष)लानि; B5 कडंगरीयामुस°; Dn1 सिताश्च सूला मुस°; D2 कलिंगराजो मुश° (for कडङ्गरायोमुस°). K1.2 पट्टिसाः; B2 पट्टिशैः; Dn1 मुद्गराः (for पट्टिशाः). D4 शिवाश्वषङ्गामुशलोग्रमुद्गरा; D6 S (T3 missing) शिता(D6 °ला)श्च शूला (T2 °रा) मुसलाः स(G2.3 °लाश्च)मुद्गराः. — c) D8 विचित्र-; T2 G M2–4 चित्राश्च; M1 चक्राश्च (for पेतुश्च). D1 खंजा (for खड्गा). D4 सिताश्वशक्त्यो (for पेतुश्च खड्गा.) B5 विपुला; T2 वितताश् (for विमला). Ś2 K1 D2.3.8 विशोका; B Da1 D1.5.7 विकोषा; D6 S (T3 missing) च कोशा (for विकोशा). — Ś K1.2.4 B3 D2 om. (hapl.) 26d–27c. — d) B1 गताश्च; B4 D2.8 गजाश्च (for गदाश्च). T1 om. (hapl.) from पट्ट up to रुक्माङ्गद (in 27a). K3 B (B3 om.) D (except D8; D2 om.) G1.3 M -पट्टनद्धाः; D3 (before corr.) T2 -पट्टबंधाः (for °बद्धाः).

27 Ś K1.2.4 B3 D2 om. 27abc (cf. v. l. 26). T1 om. up to रुक्माङ्गद (cf. v. l. 26). — a) D4 रक्तावनि; D6 S (T1 om.; T3 missing) जांबूनद- (for रुक्माङ्गद-). D4 T1 G2.3 -भूषितानि; M3.4 -रूषितानि (for -भूषणानि). — b) D4 कर्तास्वर-; M2–4 जांबूनद-

प्रासाः सखङ्गाः कनकावभासाः ॥ २७
छत्राणि वालव्यजनानि शङ्खाः
स्रजश्च पुष्पोत्तमहेमचित्राः ।
कुथाः पताकाम्बरवेष्टिताश्च
किरीटमाला मुकुटाश्च शुभ्राः ॥ २८
प्रकीर्णका विप्रकीर्णाः कुथाश्च
प्रधानमुक्तातरलाश्च हाराः ।
आपीडकेयूरवराङ्गदानि
ग्रैवेयनिष्काः ससुवर्णसूत्राः ॥ २९
मण्युत्तमा वज्रसुवर्णमुक्ता
रत्नानि चोच्चावचमङ्गलानि ।
गात्राणि चात्यन्तसुखोचितानि
शिरांसि चेन्दुप्रतिमाननानि ॥ ३०
देहांश्च भोगांश्च परिच्छदांश्च

C. 8. 4915
B. 8. 94. 22
K. 8. 99. 35

(for कार्तस्वर-). — c) K3 भल्लाश्च; B1 D6 ऋष्याश्च; Da1 ऋष्यश्च; D4 रिष्ट्यश्च; D8 रुष्यश्च; T2 यष्टीश्च; G1 वदश्च (sic); M3 ऋष्टीश्च; M4 हृव्यश्च (for ऋष्ट्यश्च). T2 केशा; G1 खड्गाश्च (for पीता). B (B3 om.) Da1 D1.3.5.7 विकोषाः; D6 S (T1 om.; T3 missing) च कोशाः (for विकोशाः). — K3 D8 om. 27d. — d) V1 D4 प्राशाः. B2 D2 सदंडैः (for सखङ्गाः). K4 पेतुश्च खड्गाः कंनकावभाषाः; Da1 D1.5 प्रासाश्च खड्गाः कनकावभासः; Dn1 °श्च दंडैः कनकावभासैः; D6 S (T1 om.; T3 missing) प्रा(D6 भा)साश्च दंडाः (T2 कुंताः) कनकप्रभासाः (T2 °काशाः).

28 a) D6 S (T3 missing) शुभ्राणि (for छत्राणि). K1 व्याल-; D6 चाप-; M बाल- (for वाल-). — b) B3 भुजाश्च; D2 गजाश्च- (for स्रजश्च). D4 पुष्पोत्तर- (for °त्तम-). B1.2.4.5 Da1 D3.5.7 भुजा(B5 स्रज)श्च पुष्पोत्तमहेमभूषिताः; Dn1 M2-4 छिन्नापविद्धाश्च स्रजो विभिन्नाः (Dn1 °चित्राः); D1 भुजाश्च पुष्पोत्तमभूषिता जनाः; D6 छिन्नावरुद्धावरुजन्स्रजश्च; T1 छिन्नापविद्धा ह्यरुजस्रजश्च; T2 छिन्नापविद्धाः प्ररुचस्रजश्च; G1 छिन्नावरुद्धा विरुजस्रजश्च; G2.3 छिन्नापविद्धा विरुजः स्रजश्च; M1 छिन्नापविद्धाश्च रुजस्रजश्च. — T2 om. 28c–30d. — c) K3 कुताः; D4 कुथा; M1 कथाः (for कुथाः). Ś2 Dn1 -भूषणानि; K2 B3 D4.8 -वेष्टनाश्च; D2 -जटिताश्च; D6 S (T2 om.; T3 missing) -वेष्टनानि (for -वेष्टिताश्च). V1 B1.2.4.5 D3.7 कुथाः प-(D7 °थान्प)ताका रथवेष्टनानि (V1 B5 °श्च); Da1 D1.5 खड्गाः पताकाः परिधाः परश्वधाः; D8 क्रुधाः पताकांबरवेष्टनानि. — d) Ś2 D8 किरीटमाली; K3 °टमौली; Dn1 °टिमाला (for °टमाला). D6 G2.3 M मकुटाश्च (for मुकु°). Da1 D1.5 शुभाः (for शुभ्राः). Ś1 K1.2.4 किरीटमाली मुकुटश्च शुभ्रः (K1.4 °भ्राः); D4.8 (marg.) किरीटहारा (D4°री) मणिविद्रुमाश्च.

29 T2 om. 29 (cf. v. l. 28). — a) V1 B (except B5) Da1 Dn1 D1.3.5.7 T1 विप्रकीर्णा(Dn1 °र्णे)श्च राजन्; D2 °कीर्णा हुथाश्च; D4 °कीर्णांश्च तत्र; D6 G1 °कृताश्च भूमौ; G2.3 M °तिकीर्णकाश्च (for °कीर्णाः कुथाश्च). — b) Ś2 K1 V1 B Da1 Dn1 D1.3.5.7 प्रवाल- (for प्रधान-). Cc cites प्रवाला. V1 B5 D2.4 -मुक्ताभरणाश्च; D6 M2-4 -मुक्तास्तरला(D6 °ला)श्च; T1 G M1 -मुख्यास्तरला-(M1 °णा)श्च (for -मुक्तातरलाश्च). — c) K3 D4 -वरांगदाश्च (for °गदानि). — D4 om. 29d–51a — d) D2 तथा परिष्काः (for ग्रैवेयनिष्काः). Ś2 D2 G1.2 M2-4 सु-; B4 Da1 D1.5 च (for स-). D2.3.7 -चित्राः; D5 -सूत्रः; D6 G2 -सूताः (for -सूत्राः).

30 D4 T2 om. 30 (cf. v. l. 29, 28). — a) G2.3 वस्त्र- (for वज्र-). K3 D6.8 G M -युक्ता (for -मुक्ता). — b) D6 रक्तानि (for रत्नानि). M2-4 चोच्चानि च (for °वच-). B2 -भूषणानि; D2 -सांगजानि (for -मङ्गलानि). — c) K1.4 चार्म्यंत-; D6 S (T2 om; T3 missing) चाभांति (for चात्यन्त-). K3 D8 -सुखेधितानि; B2 -सुखेषितानि; M1.3 सुखोचितानां (for -सुखोचितानि). — d) B5 चंद्र- (for चेन्दु-). K3 -प्रतिमासितानि; D2 °मप्रभानि; D8 °भाननानि (for °माननानि).

31 D4 om. 31 (cf. v. l. 29). — a) K1 परिश्छदांश्च; D3 परस्वधांश्च (for परिच्छदांश्च). — b) K3 ततो (for त्यक्त्वा). D8 मनोज्ञाति- (for °ज्ञानि). Dn1 सुखानि चैव; D6 S (T3 missing) हताः (T1.2 G1 हतः; M च तैः) सुखानि (for सुखानि चापि). — c) K3 सुधर्म-; D6 G1 स्वकर्म-; T2 सधर्म- (for स्वधर्म-). D8 -निष्ठा. — After 31abc, D2 ins.:

1183* गता इतः स्वर्गलोकाय राजन् ।

— d) V1 partly damaged. K3 व्याश्चाव- (sic); V1 B Dn1 D3.7 व्याप्याशु; Da1 D1 **शु; D2 घ्यत्याशु; D5 व्या*शु; D6 T2 G M2-4 प्रासश्च; T1 प्रासव्य-; M1 प्रासांश्च (for व्याप्ताश्च). G1 लोका- T1 युधि सं-; T2 हि समा-; G2 [अ]थ सं- (for यशसा). K3 B Da1 Dn1 D3.5-7 S (T3 missing) गतास्ते; D3 गतांश्च (for समीयुः). — V1 B Da1 Dn1 D1.3.5-8 S (T3 missing) ins. after 31: D2 after 32a:

C. 8. 4915 B. 8. 94. 22 K. 8. 99. 35

त्यक्त्वा मनोज्ञानि सुखानि चापि ।
स्वधर्मनिष्ठां महतीमवाप्य
व्याप्तांश्च लोकान्यशसा समीयुः ॥ ३१
इत्येवमुक्त्वा विरराम शल्यो
दुर्योधनः शोकपरीतचेताः ।
हा कर्ण हा कर्ण इति ब्रुवाण
आर्तो विसंज्ञो भृशमश्रुनेत्रः ॥ ३२
तं द्रोणपुत्रप्रमुखा नरेन्द्राः
सर्वे समाश्वास्य सह प्रयान्ति ।
निरीक्षमाणा मुहुरर्जुनस्य
ध्वजं महान्तं यशसा ज्वलन्तम् ॥ ३३
नराश्वमातङ्गशरीरजेन
रक्तेन सिक्ता रुधिरेण भूमिः ।
रक्ताम्बरस्रक्तपनीययोगा-
न्नारी प्रकाशा इव *सर्वगम्या ॥ ३४
प्रच्छन्नरूपा रुधिरेण राज-

1184* निवर्त दुर्योधन यान्तु सैनिका
व्रजस्व राजञ्शिबिराय मानद ।
दिवाकरो ह्येष विलम्बते प्रभो
पुनस्त्वमेवात्र नरेन्द्र कारणम् ।

[(L. 1) B1 D2.8 T1 G2 निव(D8 °र्वं)र्त्य; Da1 D1.5 वयं तु; T2 G1 M निवृत्य (for निवर्त). Da1 D1.5 याम; T2 M1 यांति (for यान्तु). — (L. 2) B Da1 D1.3.5.7 व्रजंतु; D8 भजस्व (for व्रजस्व). V1 शिबिराश्चाददानाः; B1.3–5 D3.7.8 G3.8 °राणि मानद; B2 °राण्यददानाः (sic); Da1 D1.5 °राय दीनाः; T1 °राञ्चिनाय (for °राय मानद). D2 वज्राख्यनास्ते शिबिराय मानदाः; D6 सुजन्स्वराजं च विनात्ममानं. — (L. 3) B3 Dn1 D2.6.8 [ऽ]प्येष (for ह्येष). — (L. 4) D8 एतान्हि (for एवात्र). V1 B2 वेत्सि; D8 योत्स्यसे (for कारणम्).]

— After the above, sequence in D6 T1 G2.3 M1 is: 44c–46b, 1194*, 46e–53b, 40c–41d, 1186*, 1187*, 1188*, 42ab, 1189*, 42c–43b, 1191*, 43c–44b, 53cd, 1194*, 53e–57d, 1196*, 58–60; followed by lines 13–16 of App. I (No. 44) in D6 T1 G2 M1, and by lines 13–14 in G3.

32 Before 32, G1.3 M2–4 ins. संजयः. D4 om. 32 (cf. v. l. 29). — a) D6 S (T3 missing) एतावदू (for इत्येवम्). K4 उक्ता. — After 32a, D2 ins. 1184*. — b) K3 V1 B Da1 Dn1 D1–3.5.7.8 दुर्योधनं. B5 -चित्तः; Da1 D1.5 -चित्तं (for -चेताः). D6 S (T3 missing) दुर्योधनं चैव निवर्तयित्वा. — c) K3 V1 B Da1 Dn1 D1.3.5.7.8 ब्रुवाणम्. — d) K1.4 अस्रुनेत्रः (K4 °त्रं); D2 उत्पपात (for अश्रुनेत्रः). K1 अंतोविसंज्ञो भृशमस्रुनेत्रः; K3 V1 B Da1 Dn1 D1.3.5.7.8 आर्तं विसंज्ञं भृशमश्रुनेत्रं. — For 32cd, D6 S (T3 missing) subst.:

1185* मुदाय राजन्विनिविष्टबुद्धि
हा कर्ण हा कर्ण इति ब्रुवाणम् ।

[(L. 1) D6 G1 राजाभिनिविष्ट- (for राजन्विनि°).]

33 D4 om. 33 (cf. v. l. 29). — a) T2 नरेंद्र. — b) T2 समाश्वस्य. Ś1 V1 B1–4 Da1 Dn1 D1.3.5.7 मुहुः प्रयांति (B3 °याताः); B5 सह प्रयाताः; D6 S (T3 missing) ततः प्रजग्मुः (for सह प्रयान्ति). D2 सर्वे शोकास्ते तदाभवद् (sic). — D3 om. 33c–8.69.17b. — c) K3.4 Dn1 D1.3.6.7 G3 निरीक्ष्यमाणा; B4 °क्षमाणं (for °क्षमाणा). D6 S (T3 missing) ध्वजम् (for मुहुर्). — d) D6 G1.3 रथं च दिव्यं; T2 G2 M दिव्यं महांतं (for ध्वजं महान्तं). Ś2 K1.4 B5 सहसा (for यशसा).

34 D2.4 om. 34 (cf. v. l. 33, 29). — b) K3 D6.8 S (T3 missing) रक्तेन सिक्तां रुधिरेण भूमिं; V1 B Da1 Dn1 D1.3.5.7 रक्तेन सिक्तां च तथैव भूमिं. Cc cites रक्तेन (as in text). — Ś K1.2.4 om. 34c. — c) V1 रक्तांबरं; T1 युक्तांबर- (for रक्ताम्बर-). K3 V1 B5 तपनीययोगां D6 °योधान् (for °योगान्). T2 रक्तांबरालंकृतगात्रयष्टिं. — d) K3 V1 B Da1 Dn1 D1.3.5.7.8 S (T3 missing) नारीं; D6 अरीन् (for नारी). K3 D8 प्रकामाम्; V1 B Da1 Dn1 D1.3.5–7 T1.2 G M1 Ca प्रकाशाम्; M2–4 प्रशांताम् (for प्रकाशा). Ś K1.2.4 सर्वगस्य; K3 V1 B Da1 Dn1 D1.3.5.7.8 T2 Ca °गम्यां; D6 G1.3 M °रम्यां; T1 G2 °रूपां (for *सर्वगम्या).

35 D2.4 om. 35 (cf. v. l. 33, 29). — a) Ś1 K3 B1–3 Dn1 D6.8 T1 G1.2 M2–4 प्रच्छन्नरूपां; Ś2 K1 प्रच्छिन्नरूपा; V1 Da1 D1.5 प्रच्छन्ननाना-; T2 प्रधूम्ररूपां (for प्रच्छन्नरूपा). — b) T1 हि; T2 च; G2 M3 [ऽ]भि- (for ऽति-). K3 B2.3 D6.8 S (except G3; T3 missing) -विराजमानां; B1.4.5 Da1 Dn1 D1.3.5.7 °माने (for °माना:). — c) K3 नैतायतत्वस्थुः (sic) (for नैवावतस्थुः). — d) T1 कृपातिता (sic); T2 प्रवेगिता; M1 प्रव्राजितो (for °जिता). K3 V1 B1.3–5 Da1 Dn1 D1.3.5.7.8 देवलोकाय सर्वे; D6 T1 G M नरदेवा (M1 °वो)

रौद्रे मुहूर्तेऽतिविराजमानाः ।
नैवावतस्थुः कुरवः समीक्ष्य
प्रव्राजिता देवलोकाश्च सर्वे ॥ ३५
वधेन कर्णस्य सुदुःखितास्ते
हा कर्ण हा कर्ण इति ब्रुवाणाः ।
द्रुतं प्रयाताः शिविराणि राज-
न्दिवाकरं रक्तमवेक्षमाणाः ॥ ३६
गाण्डीवमुक्तैस्तु सुवर्णपुङ्खैः
शितैः शरैः शोणितदिग्धवाजैः ।
शरैश्चिताङ्गो भुवि भाति कर्णो
हतोऽपि सन्सूर्य इवांशुमाली ॥ ३७
कर्णस्य देहं रुधिरावसिक्तं
भक्तानुकम्पी भगवान्विवस्वान् ।
स्पृष्ट्वा करैर्लोहितरक्तरूपः
सिष्णासुरभ्येति परं समुद्रम् ॥ ३८
इतीव संचिन्त्य सुरर्षिसंघाः
संप्रस्थिता यान्ति यथानिकेतम् ।
संचिन्तयित्वा च जना विसस्रु-
र्यथासुखं खं च महीतलं च ॥ ३९
तदद्भुतं प्राणभृतां भयंकरं

C. 8. 4925
B. 8. 94. 32
K. 8. 99. 45

---

यथाक्षैः (T1 °क्षे); T2 नरदेवा ययुस्ते (for देवलोकाश्च सर्वे). B2 कुरुप्रवीराः सह भूप सर्वैः.

36 D2.4 om. 36 (cf. v. l. 33, 29). D6 om. 36[a]–37[b]. — [a]) Ś2 वदेन; T2 पातेन (for वधेन). V1 B1.3–5 Da1 Dn1 D1.3.5.7 तु (for सु-). Da1 D1.5 -दुःखिताः (D1 °ता:) स्थिता; M1 °तास्तैर् (for °तास्ते). B2 नृपं समाश्वास्य सुदुःखितास्ते. — [b]) K2.4 ब्रुवाण:; B2 ब्रुवाणौ (for °णाः). — [c]) G1 द्रुमं (for द्रुतं). S (except T2; T3 missing) प्रजग्मुः (for प्रयाताः). K2 (*inf. lin.*) शिबिरान्; B5 T1 G2 °राय (for °राणि). — [d]) K3 V1 Da1 Dn1 D1.5.8 अवेक्ष्यमाणाः; K4 अवेक्षमाणः; D3.7 निरीक्ष्यमाणाः; G2 M1 इवेक्ष° (for अवेक्ष°).

37 D2.4 om. 37 (cf. v. l. 33, 29). D6 om. 37[ab] (cf. v. l. 36). V1 repeats 37 after 40 and B2.5 after the repetition of 40[c]. — [a]) D3 गांजीव- (for गाण्डीव-). Dn1 -मुक्तं (for -मुक्तैस्). K3 V1 (both times) B2 (second time).5 (first time) Da1 D1.5.8 T2 च (for तु). Ś1 सुपर्ण- (for सुवर्ण-). — [b]) T2 damaged. K3 V1 (first time) B1.2 (first time).3.4.5 (first time) Da1 Dn1 D1.3.5.7 S (T2 damaged; T3 missing) शिलाशितैः; B2 (second time) सितैः शरैः; B5 (second time) बाणैश्चितः (for शितैः शरैः). V1 (first time) -दिग्धराजैः; B2 (first time) °गात्र-; B5 (second time) T1 °गात्रैः; G2 °वस्त्रैः (for °वाजैः). — [c]) G1 चितांगैर्. B1 Dn1 T1 युधि भाति; D6 T2 G M विरराज (for भुवि भाति). V1 (second time) महावपुष्मानभिभाति कर्णो; B2.5 (both second time) महावपुः संविरराज कर्णो. — [d]) B2.5 (both second time) -जालैः (for -माली). V1 (second time) हतोपि सूर्यस्य इवांशुजालैः; D3 S (T3 missing) हतोपि दीप्तांशुरिवांशुजा(D6 G3 °मा)लैः.

38 D2.4 om. 38 (cf. v. l. 33, 29). — [a]) D6 S (except T1; T3 missing) रुधिरांबुसिक्तं (for °रावसिक्तं). — [b]) G2 पुत्रानुकंपी (for भक्ता°). — [c]) B1.4 पृष्ट्वा (for स्पृष्ट्वा). D3 स्पृष्टांशुभिर्. V1 B Da1 Dn1 D1.3.5.7 [अं]शुभिर् (for करैर्). K3 -कांतरूपं; B2 Da1 D1.5 -रक्तरूपं (for °रूपः). D6 T1.2 G1.3 M2–4 स्पृ(T2 द्र)ष्ट्वा कराग्रैः क्षतजानुरूपैः (D6 °जानुलेपैः; G1 °जानुकूलैः; M2–4 °जात्क-रूपैः); G2 स्पृष्ट्वाक्षराग्रैः क्षमतानुवेति; M1 स्पृष्ट्वा कराग्रैर्लोहितरक्तरूपं; Cv स्पृष्टांशुभिर्लोहितरक्तरूपं. — [d]) V1 स्विन्नः सुरभ्येति (sic). B1.3–5 Da1 Dn1 D1.3.5.7.8 Cc सिस्नासुर् (for सिष्णा°). S K2.4 [अ]परं (for परं). K4 शुमद्रं (sic). K1 सिस्नासुरभ्येत्य परे समुद्रं; K3 अस्तात्समभ्येति परं समुद्रं; B2 सिस्नातुं समभ्येत्य परं समुद्रं; D6 T2 तदा(T2 तृष्णा)नुरागादपरं स°; T1 G स्नातुं तदागादपरं स°; M सिष्णासुरागाद°; Cv सिस्नासुरभ्येत्य परं स°.

39 D2.4 om. 39 (cf. v. l. 33, 29). — [a]) Ś K1.2.4 इत्येव (for इतीव). Dn1 D5.8 संचित्य. K1 सुरर्षिसंघः; B1 °र्षिसंघैः; D6 °र्षयस्तत; T1.2 G2 महर्षयश्च; G1.3 M सुरर्षयश्च (for °र्षिसंघाः). — [b]) D6 सु- (for सं-). K3 om.; D6 S ते तु (for यान्ति). K1 B4 Dn1 D3.7 -निकेतनं; G1 -निकेतुं (for -निकेतम्). — [c]) Ś1 K2 एवं ** यित्वा; Ś2 (*sup. lin.* as in text) एवं कथयित्वा; D6 T1.2 G संचित्य सर्वा (for °न्तयित्वा). Ś2 च जनता; K1 मजताः (sic); K3 V1 B D (D2.4 om.) T1.2 G M1 Ca.c जनता; M2–4 तु जना (for च जना). K3 विसस्तुर्; D6 [अ]वसद्य; G1 तु सूर्यं; Cc विसस्तुः (as in text). — [d]) Da1 D1.5 यथायथं (D1 °था); T1.2 G2 °गतं; G1 तथा सुखं (for यथासुखं). K3 चाति-; Da1 D1.5 स्वं च; D6 S खे च (for खं च). D6 S महीतले (for °तलं).

40 D2.4 om. 40 (cf. v. l. 33, 29). M1 om. 40[ab]. — [a]) K2 भयंकरैर् (for °करं). — [b]) Ś2 K3 B3 Dn1 D3.6.8 T1 G M2–4 निशाम्य (for निशम्य). B1.4.5

C. 8. 4925
B. 8. 94. 32
K. 8. 99. 45

निशम्य युद्धं कुरुवीरमुख्ययोः ।
धनंजयस्याधिरथेश्च विस्मिताः
प्रशंसमानाः प्रययुस्तदा जनाः ॥ ४०
शरैः संकृत्तवर्माणं वीरं विशसने हतम् ।
गतासुमपि राधेयं नैव लक्ष्मीर्व्यमुञ्चत ॥ ४१
नानाभरणवान्राजन्मृष्टजाम्बूनदाङ्गदः ।
हतो वैकर्तनः शेते पादपोऽङ्कुरवानिव ॥ ४२
कनकोत्तमसंकाशः प्रदीप्त इव पावकः ।

---

D6 -मुख्याः; D8 -संख्ययोः; G2 -युद्धे (for -मुख्ययोः). — After 40ab, M2.4 read 59. B2.5 repeat 40c followed by the repetition of 37, after 40. G1 M3 read 40cd after 53ab. — c) M1 धनंजयश्च. D6 T1 G2 [स]तिरथस्य (D6 °श्च); T2 M1 [स]तिरथेश्च (for [आ]धि°). Ś2 विस्मृताः. B2.5 (both second time) धनंजयं चाधिरथिं (B5 °थं) च सर्वे. — d) D6 T1 G M [स]र्जुनं (for जनाः). — After 40, V1 repeats 37 and D6 T1 G M ins. an addl. colophon [*Adhy. name:* M1 रणाजिरवर्णनं. — *Adhy. no.:* D6 90; T1 M1 110; G2 109].

*41* *Before 41, D6 S (except T2; T3 missing) ins.* संजयः. For sequence in D6 T1 G2.3 M1, cf. v. l. 31. D2.4 om. 41 (cf. v. l. 33, 29). — a) K3 V1 B3.5 Dn1 D5.8 T1.2 G1.3 M शर-; G2 रथ- (for शरैः). K4 -मर्माणं (for -वर्माणं). — b) Ś2 विशासने; Ca विशसने (as in text). Dn1 D6 S (T3 missing) रुधिरोक्षितवक्ष- (Dn1 °वास)सं. — c) M1 गांगेयं (for राधेयं). — d) B2.5 Dn1 D6 S (T3 missing) विमुंचति (T1 °ते) (for व्यमुञ्चत). V1 B1.2.4 Da1 D1.3.5.7 न लक्ष्मीः प्रतिमुंचति. — After 41, V1 B Da1 Dn1 D1.3.5–7 S (T3 missing) ins.:

1186* निष्टप्तहेमवपुषं ज्वलनार्कसमत्विषम् ।
जीवन्तमिव तं शूरं सर्वभूतानि मेनिरे ।
हतस्यापि महाराज सूतपुत्रस्य संयुगे ।
वित्रेसुः सर्वभूतानि सिंहस्येवेतरे मृगाः ।

[Da1 D1.5 om. lines 1–2. — (L. 1) B1 निस्तप्त-; B3–5 D7 निष्टप्त; D3 निमृल- (for निष्टप्त-). Dn1 D6 S (T3 missing) तं तु (Dn1 T2 G1 तप्त-) जांबूनदनिभं (for the prior half). B1.2.4.5 Dn1 T2 -प्रभं (for -त्विषम्). D6 T1 G M बालार्क(M2–4 चंद्रार्क)सदृशद्युतिं (D6 °प्रभं). — (L. 2) B1 ज्वलंतम् (for जीवन्तम्). V1 B1.4.5 D7 शूरं च; B3 T3 शूरं तं (by transp.); D8 शूरश्च. — (L. 3) V1 हता राज (for महाराज). — (L. 4) B2 Dn1 D6 T1.2 G3 M सर्वतो यो(M यौ)धाः (for °भूतानि). T2 परे (for [इ]तरे).]

B2.5 Dn1 D6 S (T3 missing) cont.:

1187* हतोऽपि पुरुषव्याघ्रो व्याहरन्निव लक्ष्यते ।

[Dn1 T2 M2–4 जीववान् (for व्याहरन्). B2.5 दृश्यते (for लक्ष्यते).]

B2.5 Dn1 D6 S (T3 missing) cont.: V1 B1.3.4 Da1 D1.3.5.7 cont. after 1186*:

1188* नाभवद्विकृतं किंचिन्मृतस्यापि महात्मनः ।
चारुवेषधरं राजञ्चारुमौलिशिरोधरम् ।
तन्मुखं सूतपुत्रस्य पूर्णचन्द्रसमद्युति ।

[(L. 1) B1 विकृतिं; Dn1 T2 G2.3 विकृतिः; D6 विदितं (for विकृतं). V1 वक्त्रे; B5 वक्त्रं; Dn1 T2 काचिन् (for किंचिन्). V1 मृगस्य; B1 D3.7 सूतस्य; D6 G1 हतस्य; T2 गतस्य (for मृतस्य). — (L. 2) V1 B1.3–5 D3 -वेशधरं (for -वेष°). Dn1 T2 वीरं (for राजन्). D6 चारुवेष- (for °मौलि-). B3 -शिरोरुहं; D3.7 -धरं शुभं (for -शिरोधरम्). — (L. 3) B2 D3.7 T2 -समद्युतिं; D6 -समद्युतिः; G1 -समप्रभं (for -समद्युति).]

*42* For sequence in D6 T1 G2.3 M1, cf. v. l. 31. D2.4 om. 42 (cf. v. l. 33, 29). T2 G1 M2–4 read 42ab after 43. — a) V1 नानाकचणवान् (sic) (for नानाभरण°). — b) K1.4 हृष्ट-; V1 B D3.4.7 तप्त- (for मृष्ट-). D6 S (T3 missing) तप्तजांबूनदप्रभः. D6 S (T3 missing) ins. after 42ab: Dn1 ins. after 43:

1189* वर्षित्वा शरवर्षाणि प्रताप्य रिपुवाहिनीम् ।
श्रीमानिव सहस्रांशुर्ज्वलन्सर्वान्प्रताप्य च ।

[(L. 1) Dn1 T2 शरवर्षेण (for °वर्षाणि). — (L. 2) Dn1 T2 जगत्सर्वं (for ज्वलन्सर्वान्). Dn1 नः (for च).]

Dn1 T2 cont.:

1190* हतो वैकर्तनः कर्णः सपुत्रः सहवाहनः ।
अर्थिनां पक्षिसंघस्य कल्पवृक्षो निपातितः ।

[T2 om. line 1. — (L. 2) Dn1 पक्ष- (for पक्षि-).]

— c) D8 ततो (for हतो). D6 S (T3 missing) कर्णः (for शेते). — d) T2 सूतपुत्रः सनातनः. — After 42, Ś K D8 ins. 1192*.

*43* For sequence in D6 T1 G2.3 M1, cf. v. l. 31. D2.4 om. 43 (cf. v. l. 33, 29). — a) T2 बभावुत्तम-संकाशः. — b) V1 B Da1 Dn1 D1.3.5–7 S (T3 missing) ज्वलन्निव विभावसुः. — After 43ab, V1 B Da1 Dn1 D1.3.5–7 S (T3 missing) ins.:

1191* स शान्तः पुरुषव्याघ्रः पार्थसायकवारिणा ।
यथा हि ज्वलनो दीप्तो जलमासाद्य शाम्यति ।

यमयोर्मध्यगं वीरं शनैर्यान्तं विचेतसम् ।
समासाद्य तु राजानं दुर्योधनहितेप्सया ।
सूतपुत्रस्त्रिभिस्तीक्ष्णैर्विव्याध परमेषुभिः ।
तथैव राजा राधेयं प्रत्यविध्यत्स्तनान्तरे । [80]
शरैस्त्रिभिश्च यन्तारं चतुर्भिश्चतुरो हयान् ।
चक्ररक्षौ तु पार्थस्य माद्रीपुत्रौ परंतपौ ।
तावप्यधावतां कर्णं राजानं मा वधीरिति ।
तौ पृथक्शरवर्षाभ्यां राधेयमभ्यवर्षताम् ।
नकुलः सहदेवश्च परमं यत्नमास्थितौ । [85]
तथैव तौ प्रत्यविध्यत्सूतपुत्रः प्रतापवान् ।
भल्लाभ्यां शितधाराभ्यां महात्मानावरिंदमौ ।
दन्तवर्णांस्तु राधेयो निजघान मनोजवान् ।
युधिष्ठिरस्य संग्रामे कालवालान्हयोत्तमान् ।
ततोऽपरेण भल्लेन शिरस्त्राणमपातयत् । [90]
कौन्तेयस्य महेष्वासः प्रहसन्निव सूतजः ।
तथैव नकुलस्यापि हयान्हत्वा प्रतापवान् ।
ईषां धनुश्च चिच्छेद माद्रीपुत्रस्य धीमतः ।
तौ हताश्वौ हतरथौ पाण्डवौ भृशविक्षतौ ।
भ्रातरावारुरुहतुः सहदेवरथं तदा । [95]
तौ दृष्ट्वा मातुलस्तत्र विरथौ परवीरहा ।
अभ्यभाषत राधेयं मद्रराजोऽनुकम्पया ।
योद्धव्यमद्य पार्थेन फल्गुनेन त्वया सह ।
किमर्थं धर्मराजेन युध्यसे भृशरोषितः ।
क्षीणशस्त्रास्त्रकवचः क्षीणबाणो विबाणधिः । [100]

छन्तं (as above). V1 सेनानिवेशमछैतं; B5 सुतसेनसमाक्रांतं (sic); D1 सेनानिवेशयमछैतं (sic); D8 T G M1 °शं गच्छंतं (for the prior half). K4 क्षतविक्षितं; D8 G2 भृशपीडितं; T G3 M1 भृशविक्षतं; G1 भृशवीक्षितं; Ca क्षतविक्षतः (for °विक्षतम्). — (L. 77) D8 दृष्ट्वा (for वीरं). B5 यमयोरपि मध्यस्थं (for the prior half). B5 शरपात-; D8 सनिर्यांत- (for शनैर्यान्तं). — (L. 78) T G M1 स समासाद्य राजानं (M1 °नस्) (for the prior half). B5 अथायंतं युधिष्ठिरं; D8 T G M1 तथा यांतं युधिष्ठिरं (T2 [sup. lin.] विचेतसं) (for the post. half). — (L. 79) G1 ततस् (for त्रिभिस्). Dn1 D8 बाणैर् (for तीक्ष्णैर्). D1 om. (hapl.) from स्तीक्ष्णै up to त्रिभिश्च in line 81. — (L. 80) T2 M1 सूतपुत्रं (for प्रत्यविध्यत्). — (L. 81) B5 स (for च). Dn1 शरैश्चतुर्भिर्यंतारं; D8 शरैश्च त्रिभिरायांतं (for the prior half). — (L. 82) D8 कर्णस्य (for पार्थस्य). T1.3 G चक्ररक्षौ नृपसुतौ (for the prior half). Dn1 D8 महारथौ (for परंतपौ). — (L. 83) Dn1 D8 T1.3 G M1 अभ्यधावतां (for अप्य°). B5 कर्णौ; Dn1 D8 संख्ये; M1 कर्णो (for कर्णं). M1 om. मा. K4 V1 B2-4 Da1 D1.2.5 G1 M1 [अ]वधीद् (for वधीर्). — After line 83, Dn1 D8 ins.:

आवां रणे विनिर्जित्य घातयाद्य महाभुज ।
त्वं धर्मशास्त्रविद्वीर ब्रह्मण्यस्त्वमनुत्तमः ।
त्वं दानशूरो विक्रान्तस्त्वं धनुर्वेदविद्वरः ।
मा वधीर्धर्मराजानमिति चाकुलतां गतौ ।

[(L. 1) D8 घातयीथ (for °याद्य). Dn1 आवयोरेनमजिते घातयाद्य महाभुज. — (L. 2) Dn1 त्वं धर्मशास्त्रविद्वांस्त्वं त्वं ब्रह्मण्य अनुत्तमः. — (L. 4) Dn1 व्याकुलतां.]

— (L. 84) D8 lacuna for पृथक्शर, and om. (hapl.) from राधेय up to धाराभ्यां in line 87. B5 Da1 D1.5 अभिवर्षेतां; Dn1 D8 S सम° (for अभ्य°). — (L. 85) S परं यत्नं समास्थितौ (for the post. half). — (L. 86) T2 प्रत्यविध्यत राधेयः (for the prior half). — (L. 87) Dn1 D8 S भल्लाभ्यां भृशतीक्ष्णाभ्यां (for the prior half). Dn1 D8 राधेयः प्रत्यविध्यत (for the post. half). — (L. 88) D8 हंसवर्णांस्; T2 रक्त° (for दन्त°). M2-4 विजघान (for निज°). Dn1 D8 S महाजवान् (for मनो°). B5 चंद्रवर्णांश्च राजानो विनिघ्नन्स मनोजवान्. — (L. 89) T1 * * तालान्; T2 कालपाशान् (for °वालान्). T1.3 G1.3 repeat and T2 G2 read line 90 after line 92. — (L. 90) G1 रणेन (for ऽपरेण). Dn1 D8 अपाहरत्; T1 (first time) अथाहरत्; T3 G3 (both first time) अथोहरत् (for अपातयत्). T1 (second time).2.3 (second time) G1 (second time).2.3 (second time) M भृश(G2 °शं)तीक्ष्णेन भारत; G1 (first time) शिरस्त्राणमथोहरत् (for the post. half). — T2 G2 M1.3 om. line 91. — (L. 91) B1 महात्मा स (for महेष्वासः). T1.3 G1.3 भारत (for सूतजः). — (L. 92) Dn1 D8 [अ]पि (for [अ]थ). T1.3 G M महारथः; T2 महाजवान् (for प्रतापवान्). — After line 92, T1.3 G1.3 repeat and T2 G2 read line 90. — (L. 93) V1 ईशां; Dn1 इषुं; D8 इष्टं (for ईषां). G1.2 धनुश्चिच्छेद वीरस्य (for the prior half). Dn1 धीमताः; T3 G3 भारत (for धीमतः). — (L. 94) M1 हत्वाश्वौ (for हताश्वौ). K4 भृशवीक्षतौ; B1 °दुःखितौ; Dn1 D8 °पीडितौ; T1 G1 °वीक्षितौ; T3 G3 शरविक्षतौ (for भृश°). — (L. 95) B1 T1 G2 तथा; B1 D8 प्रति (for तदा). — (L. 96) Dn1 D8 S transp. मातुलः and विरथौ. — (L. 97) D8 मद्रराजानुकंपया. — (L. 98) Dn1 D8 S मार्गितव्यस्त्व(M3 °व्यं त्व)या कर्ण कुंतीपुत्रो धनंजयः. — (L. 99) Dn1 T1 G2 M1.3 अथ त्वं; D8 T2.3 G1.3 M2.4 अतस्त्वं (for किमर्थं). Dn1 D1.5 धर्मराज्ञा (D1 °जा) वै (for °राजेन). V1 भृशरोषितं; D8 °मानद. Dn1 D8 किमर्थं योद्धु(Dn1 युद्ध)मिच्छसि; S किमर्थमिह युध्यसि (T2 M1 °से) (for the post. half). — D8 S om. lines 100-103. — (L. 100) K4 पिबाणधी (sic); Da1 D1.5 विबालधिः (for विबाणधिः). B2 क्षीणबाणा

श्रान्तसारथिवाहश्च छन्नोऽस्त्रैररिभिस्तथा ।
पार्थमासाद्य राधेय उपहास्यो भविष्यसि ।
एवमुक्तोऽपि कर्णस्तु मद्रराजेन संयुगे ।
तथैव कर्णः संरब्धो युधिष्ठिरमताडयत् ।
शरैस्तीक्ष्णैः पराविध्य माद्रीपुत्रौ च पाण्डवौ ।[105]
प्रहस्य समरे कर्णश्चकार विमुखं शरैः ।
ततः शल्यः प्रहस्येदं कर्णं पुनरुवाच ह ।
रथस्थमतिसंरब्धं युधिष्ठिरवधे धृतम् ।
यदर्थं धार्तराष्ट्रेण सततं मानितो भवान् ।
तं पार्थं जहि राधेय किं ते हत्वा युधिष्ठिरम् । [110]
शङ्खयोर्ध्मायतोः शब्दः सुमहानेष कृष्णयोः ।
श्रूयते चापघोषोऽयं प्रावृषीवाम्बुदस्य ह ।
असौ निघ्नन्रथोदारानर्जुनः शरवृष्टिभिः ।
सर्वां ग्रसति नः सेनां कर्ण पश्यैनमाहवे ।
पृष्ठरक्षौ च शूरस्य युधामन्यूत्तमौजसौ । [115]
उत्तरं चास्य वै शूरश्चक्रं रक्षति सात्यकिः ।
धृष्टद्युम्नस्तथा चास्य चक्रं रक्षति दक्षिणम् ।
भीमसेनश्च वै राज्ञा धार्तराष्ट्रेण युध्यते ।
यथा न हन्यात्तं भीमः सर्वेषां नोऽद्य पश्यताम् ।
तथा राधेय क्रियतां राजा मुच्येत नो यथा । [120]
पश्यैनं भीमसेनेन ग्रस्तमाहवशोभिनम् ।
यदि त्वासाद्य मुच्येत विस्मयः सुमहान्भवेत् ।
परित्राह्येनमभ्येत्य संशयं परमं गतम् ।
किं नु माद्रीसुतौ हत्वा राजानं च युधिष्ठिरम् ।

---

विवासस: (for the post. half). — (L. 101) $K_4$ $B_{2.3.5}$ $D_{3.6.7}$ नुन्नोस्त्रैर्; $B_1$ क्षुण्णो°; $Da_1$ $D_{1.5}$ नुन्ना° (for छन्नोऽस्त्रैर्). $Dn_1$ अभितस् (for अरिभिस्). — (L. 102) $D_1$ उपहासो; *Ca* °हास्यो (*as above*). $K_4$ भविष्यति. — (L. 103) *$B_5$* राजपुत्रेण (*for* मद्रराजेन). — (L. 104) $B_{3.5}$ $Da_1$ $Dn_1$ *$D_{1.5.8}$* S तथापि (for तथैव). $D_1$ कर्णं. $B_{3-5}$ $Da_1$ $Dn_1$ $D_{1.5.8}$ $T_{1.2}$ M अपीडयत्; $T_3$ G अभिद्रवत् (for अताडयत्). — (L. 105) $K_4$ $V_1$ $B_3$ $Da_1$ $D_{1.3.5-7}$ पराविध्यन् ($K_4$ °ध्यत्); $B_5$ तथा भल्लैर्; $Dn_1$ $D_8$ तथा ($D_8$ °दा) तीक्ष्णं; $T_1$ भृशं वीरो; $T_2$ महावीर्यौ; $T_3$ G M ($M_4$ om.) भृशं तीक्ष्णैर् ($T_3$ $G_3$ $M_1$ °क्ष्णौ; $G_{1.2}$ °क्ष्णो) (for पराविध्य). — $B_5$ $D_8$ S om. *line 106*. — (*L. 106*) $K_4$ विमुखौ. — (L. 107) $Dn_1$ $D_8$ S कर्णं; $D_1$ शल्य (for शल्यः). $Dn_1$ $D_8$ [ए]वं; S [ए]नं (for [इ]दं). $Dn_1$ $D_8$ S शल्यः ($T_1$ °ल्यं) (for कर्णं). $T_3$ $G_{2.3}$ अभाषत (for उवाच ह). — (L. 108) $K_4$ $B_2$ $D_3$ S अभि($G_1$ °पि)संरब्धं. $B_5$ रथस्थं परवीरघ्नं (for the prior half). $K_4$ $B_{1.5}$ वृतं; $D_7$ रतं; T $G_{1.3}$ M स्थितं; Ca धृतम् (as. above). $D_6$ युधिष्ठिरवधोद्धतं; $D_8$ °वशे स्थितं; $G_2$ °मभिद्रवत् (for the post. half). — Before line 109, $T_2$ ins. शल्यः. — (L. 109) $T_2$ परं त्वं (for सततं). — (L. 110) $D_8$ युध्य (for जहि). $K_4$ राधेयं. — After line 110, $K_4$ $Dn_1$ $D_8$ S ins.:

हते ह्यस्मिन्ध्रुवं पार्थः सर्वाञ्जेष्यति कौरवान् ।
तस्मिंश्च धार्तराष्ट्रस्य निहते स्याद्ध्रुवो जयः ।
ध्वजोऽसौ दृश्यते तस्य रोचमानोंऽशुमानिव ।
एनं जहि महाबाहो किं ते हत्वा युधिष्ठिरम् ।

[(L. 1) S य($T_2$ त)स्मिन् (for ह्य°). $T_2$ रणे (for ध्रुवं). $T_{1.3}$ $G_{2.3}$ जेष्यंति; $T_2$ °सि. S नो रथान् (for कौरवान्). — (L. 2) $T_{1.3}$ G तु (for स्याद्). $K_4$ जयात्. — (L. 3) $Dn_1$ यस्य (for तस्य). — (L. 4) $K_4$ एवं जहि; S समो ($T_1$ शूरो; $T_2$ $M_1$ सारो; $G_1$ साधु; $M_{2-4}$ भारो) ह्येष (for एनं जहि).]

— (L. 111) $V_1$ $D_8$ $T_1$ ध्मातयोः (for ध्मायतोः). $B_5$ शंखं प्रध्मायतोः शब्दः; $T_2$ शंखं ध्मापयतोः शब्दः (for the prior half). $Dn_1$ चैव (for एष). — (L. 112) $Dn_1$ चापघोषस्य (for °षोऽयं). $Da_1$ $D_{1.5.8}$ S च (for ऽयं). $B_5$ $Da_1$ $D_{1.5}$ मेघस्येवाभि($B_5$ °ति)गर्जतः; $Dn_1$ $D_8$ S मेघस्ये($Dn_1$ °स्यै)व महास्व($Dn_1$ $D_8$ $M_1$ °स्म)नः (for the post. half). — (L. 113) $G_2$ $M_1$ अथो (for असौ). — (L. 114) $K_4$ ग्रसंति. $Dn_1$ $D_8$ त्रासयते (for ग्रसति नः). S ते (for नः). $B_5$ शरैर्ग्रसति नः सर्वान्. $D_1$ कर्णं; $G_1$ कृष्णः (for कर्ण). $M_1$ (*sup. lin.* as above) तस्यैव (for पश्यैनम्). $Dn_1$ $D_8$ पश्य कर्ण महारथं (for the post. half). — (L. 115) $B_5$ $Dn_1$ $D_8$ S पृष्ठगोपौ (for °रक्षौ). $T_{2.3}$ $G_{1.3}$ वीरस्य (for शूरस्य). $K_4$ $T_3$ $G_{2.3}$ उत्तमोजसौ. — (L. 116) $D_8$ उत्तरश् (for °रं). $Dn_1$ $D_8$ चापि (for चास्य). $Dn_1$ $D_8$ S शैनेयश् (S °य) (for वै शूरश्). $Dn_1$ $D_8$ पार्श्वं (for चक्रं). — (L. 117) $Dn_1$ $D_8$ S च ($Dn_1$ $D_8$ $T_2$ $M_1$ तु) पार्थस्य (for तथा चास्य). $Dn_1$ $D_8$ पार्श्वं (for चक्रं). — (L. 118) $B_{3.5}$ $Dn_1$ $T_{1.3}$ G $M_4$ भीमसेनस्तु; $D_{1.5}$ °स्य. $Dn_1$ राज्ञां वै; $D_8$ $T_{1.3}$ G राज्ञा वै (by transp.); $T_2$ M राज्ञ($M_1$ °ज्ञो)सौ. $V_1$ $B_2$ $Dn_1$ $D_{6.8}$ S (except $T_1$) युध्यति ($G_2$ °त). — (L. 119) $D_4$ नोपपश्यतां; $G_1$ नोपपद्यतां. — (L. 120) S कुरु (for तथा). $T_2$ राजश्च (for राधेय). $T_{1.3}$ G M वै राजा; $T_2$ राधेय (for क्रियतां). S यथा (for राजा). $Dn_1$ वै यथा; $D_8$ वै तदा; S तत्तथा (for नो यथा). Ca cites नो (as above). — (L. 121) $V_1$ भीमसेनस्य. $B_3$ (marg.) श्रांतम् (for ग्रस्तम्). $B_{4.5}$ $D_8$ S -शोभिना (for -शोभिनम्). — (L. 122) $Dn_1$ $D_8$ M नामाद्य; $T_{1.3}$ G नामास्य; $T_2$ नाम स (for त्वासद्य). $T_2$ स महान्. $D_{3.4.7}$ अभूत्; $M_3$ भवान् (for भवेत्). — (L. 123) $K_4$ आसाद्य (for अभ्येत्य). — (L. 124) $K_4$ किं तु; $V_1$ किमु; $Dn_1$ $D_8$ S किं ते (for किं नु). $Dn_1$ माद्रीसुतं. $T_{1.3}$ G धर्मराजं (for राजानं च). $V_1$

इति शल्यवचः श्रुत्वा राधेयः पृथिवीपते । [125]
दृष्ट्वा दुर्योधनं चैव भीमग्रस्तं महाहवे ।
राजगृद्धी भृशं चैव शल्यवाक्यप्रचोदितः ।
अजातशत्रुमुत्सृज्य माद्रीपुत्रौ च पाण्डवौ ।
तव पुत्रं परित्रातुमभ्यधावत वीर्यवान् ।
मद्रराजप्रणुदितैरश्वैराकाशगैरिव । [130]
गते कर्णे तु कौन्तेयः पाण्डुपुत्रो युधिष्ठिरः ।
अपायाज्जवनैरश्वैः सहदेवस्य मारिष ।
ताभ्यां स सहितस्तूर्णं व्रीडन्निव नरेश्वरः ।
प्राप्य सेनानिवेशं च मार्गणैः क्षतविक्षतः ।
अवतीर्णो रथात्तूर्णमाविशच्छयनं शुभम् । [135]
अपनीतशल्यः सुभृशं हृच्छल्याभिनिपीडितः ।
सोऽब्रवीद्भ्रातरौ राजा माद्रीपुत्रौ महारथौ ।
अनीकं भीमसेनस्य पाण्डवावाशु गच्छताम् ।
जीमूत इव नर्दंस्तु युध्यते स वृकोदरः ।
ततोऽन्यं रथमास्थाय नकुलो रथपुंगवः । [140]
सहदेवश्च तेजस्वी भ्रातरौ शत्रुकर्शनौ ।
तुरगैरग्र्यरंहोभिर्यात्वा भीमस्य शुष्मिणौ ।
अनीकं सहितौ तत्र भ्रातरौ पर्यवस्थितौ ।

Colophon.

---

B2–4 Da1 D1.5.6.8 T2 वा (for च). — (L. 125) T2 परवीरहा (for पृथिवीपते). — (L. 126) T3 G चापि (for चैव). D8 om. (hapl.) the post. half of line 126 and the prior half of line 127. T3 महारणे (for °हवे). — (L. 127) K4 राजा गृद्धी; T1.3 G2.3 राजगृध्नुर्; Ca °गृध्री (for °गृद्धी). Dn1 वरलब्धं (for भृशं चैव). D8 रथगृद्धिभिरलब्धं (for the prior half). V1 -प्रदेशितः; D8 -प्रणोदितः (for -प्रचो°). — (L. 129) K4 परिभ्रांत (sic) (for °त्रातुम्). — (L. 130) K4 -प्रमुदितैर्; D8 T1 G1.2 M -प्रचु°; Ca -प्रणु° (as above). Dn1 D8 धर्मराजस्य पुत्रो वै (for the prior half). T2 धर्मराट्चोदितैरश्वैर्मेघैराकाशगैरिव. — After line 130, K4 Dn1 D8 ins.:

राधेयस्य रथं त्यक्त्वा भीमसेनान्तिकं ययौ ।

[Dn1 कौंतेयस्य (for राधे°). D8 रथस्तूर्णं (for रथं त्यक्त्वा).]

— (L. 131) Dn1 D8 तु कर्णे (by transp.). — (L. 132) B1 D7.8 सहदेवश्च; T2 °देवेन (for °देवस्य). — Da1 D1.2.5.8 S om. line 133. — (L. 133) D6 स ताभ्यां (by transp.). Ca cites ताभ्यां (as above). V1 B2.4 Dn1 जनेश्वरः (for नरे°). — (L. 134) T2 M स; T3 G1.3 स्वं; G2 तं (for च). K4 क्षतवीक्षतः; S भृशविक्ष(T1 G1 °वीक्षि)तः. Dn1 D8 स मार्गणगणैः (Dn1 °णौ) क्षतः; D6 अवतीर्य रथाद्रुतं (for the post. half). — (L. 135) B8 Dn1 D8 S अवतीर्य (for °तीर्णो). T1 अशायद्; G2 आश्रयद् (for आविशद्). Ca cites शुभम् (as above). D6 आविशच्छयनं शुभ्रं चिंतयन्घतकर्मं तद्. — (L. 136) Hypermetric. B2.3.5 Da1 D1.5 विनीतशल्यः; M अपनीय शल्यं (for °नीतशल्यः). Dn1 तु भृशं (for सुभृशं). T1 G2 अपेत(G2 अपनीत)-शल्यो राजा तु; T2.3 अपनीय तु तं शल्यं (for the prior half). B2 हृच्छल्यानि निपीडितः; B4 S हृच्छल्येनाभि°; B5 हृच्छल्याति-नि°; D6.8 हृच्छल्याभिप्र° (for the post. half). — (L. 137) B4 T1 G2 च पांडवौ; B5 महाबलौ; Dn1 D8 युधिष्ठिरः; T2.3 G1.3 M परंतपौ (T3 G3 °प) (for महारथौ). — After line 137, T G ins.:

गच्छन्तं त्वरितौ वीरौ यत्र भीमो व्यवस्थितः ।
ततस्ते पाण्डवाः सर्वे समाभाष्य परस्परम् ।
कौरवाणां च संग्रामे कर्णस्य च महात्मनः ।

[(L. 1) T1 G3 गच्छतं.]

— (L. 138) T1 G समीपं (for अनीकं). Dn1 पांडवौ मुनि-; G1 पांडवावाश्व-; G2 °वावस्य- (for °वावाशु). B2.5 Da1 D3–5 M2–4 गच्छतं (D4 °त). D8 पांडवावा * सहदन् (sic) (for the post. half). — (L. 139) Dn1 D8 M नर्द(M2 नंद)न्वै; T G1.3 गर्जन्वै; G2 गच्छन्वै (for नर्दंस्तु). Dn1 युध्यति स; T2 युध्यत्येव (for युध्यते स). Da1 D1.5 T1.3 G M [s]सौ; D8 [s]यं (for स). — D8 om. lines 140–142. — (L. 140) D8 तथान्यं; T2 तावन्यं (for ततोऽन्यं). D8 T2 रथिपुंगवः. — D6 om. lines 142–143. — (L. 142) Dn1 वातरंहोभिर्; Co अत्र्यवहोभिर् (for अग्र्य-रंहोभिर्). K4 B8 यातौ; Dn1 यातां; D8 यथा (for यात्वा). D4 सहदेवस्य; D7 भीमसेनस्य (for यात्वा भीमस्य). Ca.o शुष्मिणौ (as above). T1.2 M तुर(T2 °रं)गैर्वातरंहोभिर्यत्र भीमस्त-रस्विनौ; T3 G तुरंगमैर्वायुजवैर्यत्र भीमस्तरस्विनौ. — After line 142, K4 Dn1 D8 ins.:

पश्यन्तौ विविधाञ्शूरान्पतितान्युधि विक्रमान् ।

[D8 पश्यतो. Dn1 योधान्पातितान्; D8 वीरान्पा° (for शूरान्प°).]

— (L. 143) K4 B1 D8 अनीकैः; V1 D5 T2.3 G M1.2.4 अनीक-. B5 सहितास् (for °तौ). Dn1 D8 आगम्य सहसा तत्र (for the prior half). D4 भ्रातरं. K4 B1.2 D2.4.7 समवस्थितौ (for पर्य°). B5 भ्रातारः पर्यवस्थितः (for the post. half). — Colophon. *Day of Karṇa's Generalship:* K4 द्वितीययुद्धदिवसे. — *Adhy. name:* T1 शल्यवाक्यं; T2 युधिष्ठिर-शिबिरप्रवेशः; G1 युधिष्ठिरपलायनं. — *Adhy. no.:* B1 63; B2 56; B5 66; Da1 74; D1 58; D4 44; D6 64; T1.2 M 70; T3 G 71.

## 19

**After 8.47.10, N Ca ins.:**

रथांस्तु तान्सप्तशताद्विमर्शां-
स्तदा कर्णः प्राहिणोन्मृत्युसद्म ।
न चाप्यभूत्क्लान्तमनाः स राज-
न्यावन्नासान्दृष्टवान्सूतपुत्रः ।
श्रुत्वा तु त्वां तेन दृष्टं समेत- [5]
मश्वत्थाम्ना पूर्वतरं क्षतं च ।
मन्ये कालमपयानस्य राज-
न्क्रूरात्कर्णात्तेऽहमचिन्त्यकर्मन् ।
न मे कर्णस्याश्रमिदं पुरस्ता-
द्युद्धे दृष्टं पाण्डव चित्ररूपम् । [10]
न ह्यन्ययोद्धा विद्यते सृञ्जयानां
महारथं योऽद्य सहेत कर्णम् ।
शैनेयो मे सात्यकिश्चक्ररक्षौ
धृष्टद्युम्नश्चापि तथैव राजन् ।
युधामन्युश्चोत्तमौजाश्च शूरौ [15]
पृष्ठतो मां रक्षतां राजपुत्रौ ।
रथप्रवीरेण महानुभाव
द्विषत्सैन्ये वर्तता दुस्तरेण ।

## 20

**After 8.48.13, S and Bom. ed. ins.:**

पूर्वं यदुक्तं हि सुयोधनेन
न फल्गुनः प्रमुखे स्थास्यतीति ।
कर्णस्य युद्धे हि महाबलस्य
मौर्ख्यात्तु तन्नावबुद्धं मयासीत् ।
तेनाद्य तप्स्ये भृशमप्रमेयं [5]
यन्मित्रवर्गो नरकं प्रविष्टः ।
तदैव वाच्योऽस्मि ननु त्वयाहं
न योत्स्येऽहं सूतपुत्रं कथंचित् ।
ततो नाहं सृञ्जयान्केकयांश्च
समानयेयं सुहृदो रणाय । [10]
एवं गते किं च मयाद्य शक्यं
कार्यं कर्तुं निग्रहे सूतजस्य ।
तथैव राज्ञश्च सुयोधनस्य
ये चापि मां योद्धुकामाः समेताः ।
धिगस्तु मज्जीवितमद्य कृष्ण [15]
योऽहं वशं सूतपुत्रस्य यातः ।
मध्ये कुरूणां ससुयोधनानां
ये चाप्यन्ये योद्धुकामाः समेताः ।

---

### 19

K$_3$ om. lines 1–3. — (L. 1) K$_4$ सप्तशता. — (L. 2) *B$_2$* मृत्युवेश्म. — Da$_1$ D$_{1.5}$ om. lines 3–8. — (L. 3) D$_2$ वाथभूत (*sic*). B$_{2.4.5}$ क्रां(B$_2$ त्वां)तमनाः; D$_4$ क्षांतमनः. D$_3$ स (for स). B$_5$ वीरो (for राजन्). — (L. 4) K$_3$ न चाप्यसान् (for यावन्नासान्). K$_3$ om. from दृष्ट up to तेन in line 5. K$_4$ सूतपुत्र. — After line 4, D$_3$ ins.:

एवं प्रसक्तोऽन्यदवाप्य सैन्यं
न मां प्राप्तः संयुगे सूतपुत्रः ।

— (L. 5) K$_3$ om. श्रुत्वा तु त्वां तेन. B$_5$ om. त्वां. Ś K$_{1.2}$ त्वा; K$_4$ तां. D$_3$ सूतपुत्रं (for तेन दृष्टं). — (L. 6) K$_4$ अश्वत्थामा. K$_3$ पूर्वंतरं क्षतं; V$_1$ °तरक्षतं. — K$_3$ om. lines 7–8. — (L. 7) Ś K$_{1.2.4}$ कालः. Ś K$_{1.2.4}$ संप्रयातः स; Dn$_1$ अपयातस्य; D$_7$ उपयानस्य. — (L. 8) K$_4$ क्रूराः कर्णौ; V$_1$ कर्णात्क्रूराद् (by transp.). K$_4$ D$_4$ नेहम् (for तेऽहम्). D$_4$ कर्मे. — After line 8, K$_4$ ins.:

तत्राश्रौपं चातिबलं च त्वामहं
कर्णेन पूर्णाक्षतविक्षताङ्गम् ।
इमामवस्थां गमितं पृषत्कै
रणादपक्रान्तमितोऽपयातम् ।

— (L. 9) B$_{1.3.4}$ Dn$_1$ D$_{2-4.6.7}$ मया (for न मे). D$_6$ [अ]त्रयुद्धे (for °मिदं). — (L. 10) Ś K$_2$ B$_5$ युद्धं; D$_6$ न तद् (for युद्धे). Dn$_1$ दृष्टे. K$_4$ पांडवं (for पाण्डव). — (L. 11) K$_3$ तयुद्धातां (sic); K$_4$ न ह्यन्योधा (sic); V$_1$ न ह्यन्यः सं°; B$_3$ D$_{1.5-7}$ न ह्यद्य (B$_3$ D$_7$ °न्यो) योद्धा; D$_3$ न ह्युद्यतो (for न ह्यन्ययोद्धा). Ś$_1$ K$_2$ न ह्युद्यतो * वि * * * * न; Ś$_2$ न ह्युदितो विविधानं नयानां (*sup. lin.* नराणां); K$_1$ न ह्युदिता विविधानां नराणां. Ca cites उद्यतः. — (L. 12) Ś$_2$ K$_{1.2.4}$ महारथो. V$_1$ यो व्यसहेत; D$_1$ योधसहते न; D$_6$ योद्य सहे. — (L. 13) K$_1$ शैनेय; V$_1$ सैनेयो. K$_4$ D$_{3.6}$ चक्ररक्षो. — (L. 14) Ś K V$_1$ B$_2$ Da$_1$ D$_{1.3.5.8}$ मे (Da$_1$ D$_{1.5}$ ते) तत्र (for तथैव). B$_2$ जानन्. — (L. 15) Ś K$_{1.2.4}$ om. the first च. K$_1$ D$_4$ शूरः; K$_4$ सूरः. — (L. 16) Ś K$_{1-3}$ पृष्ठं (Ś$_2$ °ष्ठे; K$_3$ °ष्ठौ) तौ मे; K$_4$ पृष्ठतो मे; D$_2$ पृष्ठं तौ मां (for पृष्ठतो मां). D$_6$ पृष्ठं तावरक्षतां. Ś K$_{1.2.4}$ Da$_1$ D$_{1.5}$ रक्षतो (K$_4$ °तौ). — (L. 17) K$_3$ अथ (for रथ-). — (L. 18) K$_4$ द्विपत्सैन्यैर्. B$_2$ विस्तरेण; B$_5$ दुर्धरेण.

### 20

(L. 1) G$_2$ तुभ्यं (for पूर्वं). — (L. 2) M$_{1.2}$ om. न. T$_3$ G$_3$ फाल्गुनः. — (L. 5) T$_1$ तप्ये (for तप्स्ये). T$_2$ सुभृशम्. G$_1$ M अप्रमेय (G$_1$ °यो). — (L. 6) T$_1$ शत्रुवर्गे; G$_2$ भृत्यवर्गो. — (L. 7) T$_2$ तथैव. M$_3$ वाच्योस्ति. — (L. 9) T$_1$ G$_2$ transp. सृञ्जयान् and केकयान्. — (L. 11) G$_2$ किंचिदपाद्य (sic) (for किं च मयाद्य). — (L. 12) T$_1$ विग्रहे. — (L. 14) Bomb. ed. वापि (for चापि). — T$_2$ om. (hapl.) lines 15–18. — (L. 15) T$_3$ G मे जीवितम्. — (L. 17) Bom. ed. सुहृदां च मध्ये (for ससुयोधनानां). — (L. 18) G$_2$ सूतपुत्रा°

एकस्तु मे भीमसेनोऽद्य नाथो
येनाभिपन्नोऽस्मि रणे महाभये । [20]
विमोच्य मां चापि रुषान्वितस्ततः
शरेण तीक्ष्णेन बिभेद कर्णम् ।
त्यक्त्वा प्राणान्समरे भीमसेन-
श्चक्रे युद्धं कुरुमुख्यैः समेतैः ।
गदाग्रहस्तो रुधिरोक्षिताङ्ग- [25]
श्चरन्रणे काल इवान्तकाले ।
असौ हि भीमस्य महास्विनादो
मुहुर्मुहुः श्रूयते धार्तराष्ट्रैः ।
यदि स्म जीवेत्समरे निहन्ता
महारथानां प्रवरो नरोत्तमः । [30]
तवाभिमन्युस्तनयोऽद्य पार्थ
न चास्मि गन्ता समरे पराभवम् ।
अथापि जीवेत्समरे घटोत्कच-
स्तथापि नाहं समरे पराङ्मुखः ।
भीमस्य पुत्रः समराग्रयायी [35]
महास्त्रविच्चापि तवानुरूपः ।
यत्नं समासाद्य रिपोर्बलं नो
निमीलिताक्षं भयविप्लुतं भवेत् ।
चकार योऽसौ निशि युद्धमेक-
स्त्यक्त्वा रणं यस्य भयाद्द्रवन्ते । [40]
स चेत्समासाद्य महानुभावः
कर्णं रणे बाणगणैः प्रमोह्य ।
धैर्ये स्थितेनापि च सूतजेन
शक्त्या हतो वासवदत्तया तया ।
ममैव भाग्यानि पुरा कृतानि [45]
पापानि नूनं फलवन्ति युद्धे ।
तृणं च कृत्वा समरे भवन्तं
ततोऽहमेवं निकृतो दुरात्मना ।
वैकर्तनेनेह तथा कृतोऽहं
यथा ह्यशक्तः क्रियते ह्यबान्धवः । [50]
आपद्गतं यश्च नरं विमोक्षये-
त्स बान्धवः स्नेहयुतः सुहृद्वै ।
एवं पुराणा ऋषयो वदन्ति
धर्मः सदा सद्भिरनुष्ठितश्च ।

21

$T_{2.3}$ G $M_1$ ins. after 722*: $T_1$ after 719*: $M_{2-4}$ after 8.49.80:

रथाश्च नागाश्च हयाश्च राज-
न्भीमेनाजौ निहताः संघशोऽद्य ।
राजानश्च बहवो महाबलाः
स मामुपालब्धुमरिंदमोऽर्हति ।
धृतराष्ट्रपुत्रा बलिनश्च येन [5]
महाबला निहताः प्रायशो वै ।
शूरो युद्धेष्वप्रतिवार्यवीर्यः
स मामुपालब्धुमरिंदमोऽर्हति ।
प्रतापयंस्तद्बलमुग्ररूपं
योऽसौ रणे धार्तराष्ट्रस्य वीरः । [10]
एकः सहेताप्रतिसह्यपौरुष-
स्तेनास्मि वाच्यो न त्वया वै कदाचित् ।
महारथा यत्र यत्रैव युद्धे
भिन्दन्ति सैन्यं तव कामतोऽद्य ।
तत्रैव तत्रैव रणे महात्मा [15]
दृढं भीमः परसंघानमृद्नात् ।

---

(for योद्धुकामाः). — Bom. ed. om. lines 19–28. — (L. 19) $G_1$ स (for तु). — (L. 20) $T_1$ $G_2$ [अ]विपन्नो (for [अ]स्मि°). $G_1$ महाहवे (for °भये). — (L. 21) $M_1$ विमुच्य. $T_1$ $G_2$ तु; $T_3$ $G_3$ स (for ततः). — (L. 23) $T_2$ सहते (for समरे). — (L. 24) $T_2$ चक्रे च युद्धं. $T_{1.2}$ $G_2$ $M_1$ कुरुभिः; $M_{2-4}$ °भिर्वै (for °मुख्यैः). — $T_2$ M om. lines 25–26. — (L. 26) $T_1$ क्षरन् (for चरन्). — (L. 27) $T_1$ $G_2$ om. हि. $T_1$ $G_{1.2}$ महानिनादो. — (L. 29) $G_2$ युधि (for यदि). $M_{2.4}$ स भवेन् (for समरे). $G_1$ [ऽ]रिहंता (for नि°). — (L. 30) $T_{2.3}$ $G_3$ रथोत्तमः; $G_2$ नृपो°. — (L. 31) $T_1$ [ऽ]पि (for ऽद्य). — $T_2$ M om. lines 35–44. — (L. 36) $G_2$ चास्मि (for चापि). — (L. 37) $G_2$ om. (hapl.) from रिपोर्बलं up to समासाद्य in line 41. — (L. 45) $T_1$ $M_{2.4}$ मम ह्यभाग्यानि; $T_3$ $G_3$ तवैव भा°. — (L. 46) Bom. ed. बलवंति (for फल°). — (L. 48) $T_2$ महात्मना (for दुरा°). — (L. 49.) $T_1$ [आ]ह (for [इ]ह). — (L. 50) $G_2$ यतो; $M_{2.4}$ तथा (for यथा). $T_2$ $M_{1.2.4}$ तु (for the second हि). — (L. 51) $T_2$ कश्चन यो; $T_3$ $G_3$ यच्च नरं; $G_1$ यश्च न यो (for यश्च नरं). — (L. 52) $T_1$ $G_{1.2}$ च वै; $T_2$ M च (for वै). — (L. 53) $T_{1.2}$ $M_1$ पुराणे. M ह्यृषयो. — (L. 54) $M_1$ अनुष्ठितं.

— After the above, S and Bom. ed. repeat 8.48.13.

21

$T_2$ $M_{2-4}$ om. lines 1–4. — (L. 1) $M_1$ om. हयाश्च. (L. 2) $M_1$ निहतः. — (L. 3) $M_1$ राजानश्च बलिनो येन संख्ये. — (L. 5) $G_1$ धृतराष्ट्रपुत्रो. $T_2$ ह्यतिबलेन; $T_3$ $G_3$ बलिना च (for °नश्च). — (L. 6) $T_2$ M महारणे (for °बला). — (L. 7) $T_1$ $G_1$ युद्धे हि (for युद्धेषु). $M_1$ शूरो युद्धेष्वनिवार्य**. — (L. 8) $M_{2-4}$ उपालब्धुम्. — (L. 9) $T_3$ $G_3$ प्रपातयंस् (for प्रताप°). $M_1$ उग्ररूपो; $M_4$ °तापं. — (L. 10) $T_2$ युवा; M तदा (for रणे). $T_2$ $G_2$ संख्ये; M संखे (for वीरः). — (L. 11) $T_2$ [अ]प्रतिवार्यवीर्यस्; M °वा($M_1$ °वी)र्यपौरुषस्. — (L. 12) $M_1$ वार्यो (for वाच्यो). M [अ]हं (for वै). — (L. 15) $T_2$ M स तत्र (for the first तत्रैव). — (L. 16) $M_{2.3}$

तेनास्मि वाच्यो न त्वयाहं कदाचि-
न्मा मा वोचः क्रूरमिहाद्य पार्थ ।
नास्मद्विधो वै भवता तु वाच्यो
यथा भवान्सर्वलोकस्य वाच्यः । [20]
एवं हि मा ते ब्रुवतो नरेन्द्र
कथं न दीर्येच्छतधाद्य जिह्वा ।
अहो बतेदं सुनृशंसरूपं
भवानपि ह्यत्र कर्णाद्बिभेति ।

22

After the first occurrence of 8.49.81, S ins.:

नकुलेन राजन्गजवाजियोधा
हताश्च शूराः सहसा समेत्य ।
त्यक्त्वा प्राणान्समरे युद्धकाङ्क्षी
स मामुपालब्धुमरिंदमोऽर्हति ।
कृतं कर्म सहदेवेन दुष्करं [5]
यो युध्यते परसैन्यावमर्दी ।
न चाब्रवीत्किंचिदिहागतो बली
पश्यान्तरं तस्य चैवात्मनश्च ।
धृष्टद्युम्नः सात्यकिर्द्रौपदेया
युधामन्युश्चोत्तमौजाः शिखण्डी । [10]
एतेऽद्य सर्वे युधि संप्रपीडिता-
स्ते मामुपालब्धुमर्हन्ति न त्वम् ।
त्वन्मूलमस्माभिरिदं हि वैरं
प्राप्तं तथा व्यसनं चातिघोरम् ।
द्यूते प्रमत्तेन कृतं त्वयासकृ- [15]
त्कस्मादुपालब्धुमिहार्हसि त्वम् ।
त्वमेव राजन्सततं प्रमत्त-
स्त्वमेव मूढो भारतानामसाधुः ।
त्वां प्राप्य राज्यं च विनष्टमेत-
द्व्याप्ता महत्पाण्डवाश्चैव दास्यम् । [20]
त्वत्तः कृते स्याद्वनवासदुःखं
राज्यस्य नाशो ह्यभिमन्योश्च घोरः ।
आत्मानमेवं सुनृशंसरूपं
ज्ञात्वा किमर्थं गर्हसे माद्य वीर ।
लज्जस्व राजन्यदि तेऽस्ति लज्जा [25]
तूष्णीं भूतः पश्य सर्वं कृतं नः ।
भीमो नित्यं समरस्य कर्ता
दर्पस्य भेत्ता पुनरेव नित्यम् ।
स्वयं ह्यशक्तेन नरेन्द्र युद्धे
नरेण कार्या सततं क्षमैव । [30]

23

$T_{1.3}$ G M ins. after 8.51.81; $T_2$ after the first occurrence of 8.51.82:

अद्य कर्णं रणे ग्रस्तं पश्यन्तु कुरवस्त्वया ।
प्रतपन्तमिवादित्यं स्वर्गद्वारगतं यथा ।
अद्य ते समरे वीर्यं पश्यन्तु कुरुयोधिनः ।
सूतपुत्रे हते पार्थ जानन्तु त्वां महारथम् ।
अद्य कङ्का बला गृध्रा वायसा जम्बुकास्तथा । [5]
विप्रकर्षन्तु गात्राणि सूतपुत्रस्य भारत ।
अद्यातिरथिराक्षिप्तो निहतश्च त्वया रणे ।

---

परसंख्या($M_3$ °ख्या)न्. $T_1$ अमृष्यात्. — (L. 18) $M_1$ ममा-वोचः (for मा मा वोचः). — (L. 20) $T_2$ M भवेद् (for यथा). — (L. 21) $T_1$ याते; $T_3$ $G_3$ मां ते. — (L. 23) $T_1$ बतैनं. — (L. 24) M कामान्ब्र($M_1$ °मा ब्र)वीति (for कर्णाद्बिभेति). $T_{1.3}$ G कामादवोचस्त्वमिहाद्य यद्वै.

22

(L. 1) $T_2$ -वाजियूथा; M °यौधा (for °योधा). — (L. 2) $T_1$ $G_1$ वीराः; $T_2$ शूद्राः (for शूराः). — (L. 6) $T_1$ $G_2$ परसैन्याव($G_2$ °भी)मर्दनः; $M_1$ °न्याभिमर्दः. — (L. 7) $T_2$ om. इहागतो बली. — (L. 8) $T_2$ $M_1$ चास्य (for तस्य). $T_3$ $G_3$ चापि (for चैव). — (L. 10) $T_{2.3}$ $G_3$ चोत्तमोजाः. $T_1$ शिखंडिनः. — (L. 11) $G_1$ सर्वे. $T_1$ योधे सर्वे युधि संपीडितास्ते. — (L. 14) $M_{1.3}$ प्राप्तं. — (L. 15) $T_{1.2}$ $G_2$ द्यूत-. $T_2$ च; $M_{1.3}$ [अ]य; $M_{2.4}$ स (for [अ]सकृत्). — (L. 16) $T_{2.3}$ $G_3$ तस्माद् (for कस्माद्). $T_1$ अद्य युक्तं (for अर्हसि त्वम्). $M_3$ स कस्मान्मामुपालब्धुमर्हसि त्वं. — (L. 17) $G_2$ राजा. $T_2$ om. सततं. $G_2$ प्रवृत्तं (for प्रमत्तस्). — (L. 18) $T_{1.2}$ $M_{2-4}$ भरतानाम्. $T_1$ चैव साधुः; $T_3$ $G_{2.3}$ असाधु. — (L. 19) $T_2$ प्राप्त- (for प्राप्य). — (L. 20) $T_1$ $G_1$ चापि (चैव). $T_2$ प्राप्ताश्च ते पांडवे याति दास्यं. — (L. 21) $T_1$ $G_1$ कृतोस्याद्; $G_2$ $M_{1.2.4}$ कृतं ($G_2$ $M_2$ °त-) स्याद्. (for कृते स्याद्). $M_1$ -दुर्गं (for -दुःखं). — (L. 22) $T_1$ $G_2$ M [ऽ]भिमर्शश्च; $T_2$ °मानस्य (for °मन्योश्च). — (L. 23) $T_1$ स चात्मानं वै सुनृशंसस्वरूपं; $G_2$ न चात्मानं नैव नृशंसरूपं. — (L. 24) $T_2$ गर्हसि. $G_2$ मां च वीरं. — (L. 25) $M_1$ लज्जास्व. — (L. 26) T कृतघ्नः; $G_2$ कृतं तत्. — (L. 27) $T_1$ भीमो हि नित्यं; $T_2$ M जहि मानित्वं (for भीमो नित्यं). $G_2$ समरे यस्य (for समरस्य). — (L. 28) $T_2$ दंडभर्ता; M दंडस्य भेत्ता (for दर्पस्य भेत्ता). — (L. 30) $T_{2.3}$ $G_3$ कार्यं.

23

(L. 3) $G_2$ मे (for ते). $T_2$ वीराः (for वीर्यं). — (L. 4) $T_3$ G वैकर्तने (for सूतपुत्रे). $M_1$ त्वा (for त्वां). — (L. 5) $T_2$ काका बला (for कङ्का बला). — (L. 6) $T_3$ $G_3$ प्रविकर्षंतु; $M_{2-4}$ विकर्षंतु च (for विप्रकर्षन्तु). $G_2$ सूतपुत्रं तु (for °पुत्रस्य). $T_1$ भारतं; $T_2$ मारिष (for भारत). — (L. 7) $T_1$ M अद्याधि($T_1$ °पि)रथिराक्षिप्तो; $T_3$ G अद्य सारथिना क्षिप्तो

कुरूणां शोकमाधत्तां पाण्डवानां मुदं तथा ।
अद्य त्वां प्रतिनन्दन्तु पाञ्चालाः पाण्डवैः सह ।
यथा वृत्रवधे वृत्ते देवाः सर्वे शतक्रतुम् । [10]
अद्य कर्णं रणे हत्वा प्राप्य चैवोत्तमं यशः ।
विशोको विज्वरः पार्थ भव बन्धुपुरस्कृतः ।
नारसिंहवपुः कृत्वा यथा शक्रो महासुरः ।
हिरण्यकशिपुर्दैत्यो विष्णुना प्रभविष्णुना ।
तथा त्वमपि राधेयं घोरं कृत्वा महद्वपुः । [15]
जहि युद्धे महाबाहो त्रायस्व च भयात्स्वकान् ।

24

Ś K1.2 T2 ins. after 8.52.22: K3.4 V1 B (B2 both times) D Ca.c ins. after 801*:

अद्य राज्ये करिष्यामि धृतराष्ट्रं जनेश्वरम् ।
अद्य कर्णस्य चक्राङ्गाः क्रव्यादाश्च पृथग्विधाः ।
शरैश्छिन्नानि गात्राणि विचरिष्यन्ति केशव ।
अद्य राधासुतस्याहं संग्रामे मधुसूदन ।
शिरश्छेत्स्यामि कर्णस्य मिषतां सर्वधन्विनाम् । [5]
अद्य तीक्ष्णैर्विपाठैश्च क्षुरैश्च मधुसूदन ।
रणे छेत्स्यामि गात्राणि राधेयस्य दुरात्मनः ।
अद्य राजा महत्कृच्छ्रं संत्यक्ष्यति युधिष्ठिरः ।
संतापं मानसं वीरश्चिरसंभृतमात्मनः ।
अद्य केशव राधेयमहं हत्वा सबान्धवम् । [10]
नन्दयिष्यामि राजानं धर्मपुत्रं युधिष्ठिरम् ।
अद्याहमनुगान्कृष्ण कर्णस्य कृपणान्युधि ।
हन्ता ज्वलनसंकाशैः शरैः सर्पविषोपमैः ।
अद्याहं हेमकवचैराबद्धमणिकुण्डलैः ।
संस्तरिष्यामि गोविन्द वसुधां वसुधाधिपैः । [15]
अद्याभिमन्योः शत्रूणां सर्वेषां मधुसूदन ।
प्रमथिष्यामि गात्राणि शिरांसि च शितैः शरैः ।
अद्य निर्धार्तराष्ट्रां च भ्रात्रे दास्यामि मेदिनीम् ।
निरर्जुनां वा पृथिवीं केशवानुचरिष्यसि ।

25

After 802*, T1.3 G M ins.:

अद्य राजा धर्मपुत्रो हतामित्रो भविष्यति ।
अद्य दुर्योधनो दीप्तां श्रियं राज्यं च हास्यति ।
हते वैकर्तने कर्णे भीष्मे द्रोणे च संयुगे ।
कतरत्तद्बलं कृष्ण प्रविष्टं मोक्ष्यते तु यत् ।
अद्यप्रभृति राजानं धर्मशीलं युधिष्ठिरम् । [5]
अनुमोदन्तु सुहृदो ज्ञातपूर्वाश्च ब्राह्मणाः ।
अद्य तं निहतं श्रुत्वा कर्णं वैकर्तनं मया ।

---

(for the prior half). M1 निहते च (for °तश्च). — (L. 8) M1 शोकमाधत्ते. G2 तदा (for तथा). — (L. 9) G1 प्रतिनिंदंतु (for °नन्दन्तु). — (L. 13) M नारसिंहं वपुः. — (L. 16) T1.2 G1.2 M1 भयात्स्वकात्; M2-4 भयस्वकान्.

24

For the repetition in B2, cf. 8. 48. 7. — (L. 1) B2 (first time).3 D2.6 T2 कृष्णं; B4 राष्ट्रे; B5 राजन्; D4 वाह्यं; D4 (marg.) वाच्यं; D8 राज्यं (for राज्ये). Dn1 धृतराष्ट्र-; D8 नरेश्वरं. — (L. 2) B3 कृष्णसु- (for कर्णस्य). B2 (first time) चक्रांगी; Ca.c चक्राङ्गाः (as above). B4 पृथग्जनाः (for °ग्विधाः). — (L. 3) Da1 D5 छन्नानि. V1 B (B2 both times) Da1 Dn1 D1.5.8 T2 Ca. c विह(T2 °कि)रिष्यंति (for विच°). D8 केशवः; T2 भूतले. — (L. 5) K4 छित्स्यामि; D8 छेप्यामि. — (L. 6) K2 कर्णैर् (for तीक्ष्णैर्). Ś1 विपाणैश्च; K3 विपाकैश्च; B1 °शैश्च; Da1 °पाटैश्च; D8 °वैश्च (for °ठैश्च). B2 (both times) D8 क्षुरभैर् (for क्षुरैश्च). — (L. 7) B2 (first time) वले (for रणे). V1 B2 (both times).3 Da1 D1.5.6.8 भेत्स्यामि (for छेत्स्यामि). — B1 om. lines 8–9. — (L. 8) D8 अन्य- (for अद्य). T2 च यत् (for महत्). B2 (first time) कृष्णं; Co कृच्छ्रं (as above). K4 संतिक्ष्यति; B2 (both times).3-5 D6.7 संत्यक्षति. — (L. 9) B2 (first time) वीर; T2 चिरं. B2 (both times) D6 -संभृतम्; Da1 D1.5 -संवृतम् (for -संभृ°). — (L. 10) D1 हत्वा दृष्ट्वा (for अहं हत्वा). — (L. 11) Ś K1.2.4 धर्मनिलं; D8 °राजं (for °पुत्रं). — T2 om. line 12. — (L. 12) Da1 D1.5 अन्वगात् (for अनुगान्). D6 कृपणं; Co °णान् (as above). — (L. 13) T2 हत्वा (for हन्ता). B2 (first time) कुलन- (for ज्वलन-). T2 आशीविषोपमैः (for सर्प°). — (L. 14) Dn1 D3.4 हेमविकचैर् (D4 °कृतैर्) (for °कवचैर्). K3 आबद्ध-हेमकुंडलैः; B1 Dn1 D3.4.7 गार्धपत्रैरजिह्मगैः (for the post. half). — (L. 15) Da1 D1.5 संतरिष्यामि. B4 transp. गोविन्द and वसुधां. — (L. 16) D8 अतिमन्योः. T2 शूरस्य शत्रूणां (for शत्रूणां सर्वेषां). B2 (first time) lacuna for the post. half. K3.4 मधुसूदनाः (K4 °नः). — B2 (first time) om. lines 17–19. — (L. 17) Ś K1.2.4 D6 गात्रेभ्यः; T2 कायेभ्यः (for गात्राणि). Ś K1.2.4 V1 D6.8 T2 निशितैः (for च शितैः). — (L. 18) T2 निर्धार्तराष्ट्रीं. Ś K3 B1.3 Da1 D1.5.6 T2 वा; K1 V1 वै (for च). K4 अद्य निर्धार्तराष्ट्रस्य (sic). D2 माधव (for मेदिनीम्). — (L. 19) Om. in D2. D6 T2 निरर्जुना वा पृथिवी. D6 अद्य (for अनु-). T2 केशवैषा भविष्यसि (for the post. half).

25

(L. 1) T1 M सूर्यधृतिः; G1 धर्मधृतिः (for °पुत्रो). — (L. 3) T1 M1 भीष्मद्रोणे (M1 °णौ). — (L. 4) T1 कतरस्; G1.2 M1 कतरं. M2-4 मत् (for यत्). — (L. 5) G1 धर्मराजं (for °शीलं). — (L. 7) M1 दृष्ट्वा (for श्रुत्वा).

करोतु पटहोन्मिश्रं देवतास्थानपूजनम् ।
अद्य कृष्ण हते कर्णे कुरुतां चिरसंभृतम् ।
याजनं वै महाबाहो देवतानां यथाविधि । [10]
अद्य त्वम्बा च कृष्णा च त्वरमाणे परस्परम् ।
सस्वजेतां हृषीकेश संपूर्णेऽस्मिन्मनोरथे ।
अद्य त्वां पाण्डवो ज्येष्ठस्तथार्यश्च वृकोदरः ।
उदीक्षेतां हते कर्णे कृष्ण सौम्येन चक्षुषा ।
अभिवाद्य गुरूनद्य कनिष्ठैश्चाभिवादितः । [15]
सस्वजानो ह्यहं दोर्भ्यां प्राप्स्यामि विपुलं यशः ।
अद्य कर्णे हते कृष्ण प्रशंसन्तोऽर्जुनं सुराः ।
त्रिदिवं यान्तु संहृष्टाः संगताश्च तपोधनाः ।
अद्य लोकास्त्रयः कृष्ण जानन्तु मम पौरुषम् ।
दृष्ट्वा कर्णं हतं युद्धे द्वैरथे सव्यसाचिना । [20]

26

Ś K V$_1$ B$_{1-4}$ Da$_1$ Dn$_1$ D$_{1-5.7.8}$ T$_2$ Ca.c.n ins. after 8.54.28 : B$_5$ D$_6$ after 832* :

महाद्विपानां सरलद्रुमोपमाः
  करा निकृत्ताः प्रपतन्त्यमी क्षुरैः ।
किरीटिना तेन पुनः ससादिनः
  शरैर्निकृत्ताः कुलिशैरिवाद्रयः ।
तथैव कृष्णस्य च पाञ्चजन्यं [5]
  महार्हमेतद्द्विजराजवर्णम् ।
कौन्तेय पश्योरसि कौस्तुभं च
  जाज्वल्यमानं विजयां स्रजं च ।
ध्रुवं रथाग्र्यः समुपैति पार्थो
  विद्रावयन्सैन्यमिदं परेषाम् । [10]
सिताभ्रवर्णैरसितप्रयुक्तैः
  हयैर्महार्हैं रथिनां वरिष्ठः ।
रथान्हयान्पत्तिगणांश्च सायकै-
  र्विदारितान्पश्य पतन्त्यमी यथा ।
तवार्जुनेनामरराजतेजसा [15]
  महावनानीव सुपर्णवायुना ।
चतुःशतान्पश्य रथानिमान्हता-
  न्सवाजिसूतान्समरे किरीटिना ।
महेषुभिः सप्त शतानि दन्तिनां
  पदातिसादींश्च रथाननेकशः । [20]

— (L. 8) G$_1$ पटहोन्मिश्रा. T$_1$ G$_2$ देवतास्थानपूजितं; G$_1$ °स्वनपूजनं (for the post. half). — (L. 9) M$_1$ कृष्णा. M$_{2-4}$ कुरुताच्. T$_1$ G$_2$ चि(G$_2$ ची)रसंभृतां. — (L. 10) T$_1$ धावनं; M याचनं (for याजनं). T$_1$ M$_{2-4}$ यथा विधिः. — (L. 11) T$_1$ त्वं ही च (sic); G$_1$ त्वंवाथ. — (L. 13) T$_3$ G$_{1.3}$ त्वं. G$_2$ पांडवश्रेष्ठस्. — (L. 14) T$_1$ उदीक्षतां. — (L. 15) G$_2$ M$_1$ कुरून् (for गुरून्). M$_1$ कन्यसैश् (for कनिष्ठैश्). — (L. 16) G$_1$ सस्वजे त्वाम्; G$_2$ °जेन्यो हि (for °जानो हि). — (L. 18) M$_1$ संहताश्. — (19) G$_2$ कृत्स्नं जानंतु पौरुषं (for the post. half).

26

B$_{1.3}$ om. lines 1–4; T$_2$ reads the same after line 8. — (L. 1) K$_4$ महाद्रुमानां (for °द्विपानां). Da$_1$ D$_{1.5}$ सबल- (for सरल-). T$_2$ नागा गिरीणां सदृशा महाशाः. — (L. 2) T$_2$ शरैर् (for करा). K$_4$ निकृंताः; D$_4$ विकृंताः (for निकृत्ताः). D$_8$ क्षुरैः; T$_2$ भृशं (for क्षुरैः). — (L. 3) B$_3$ किरीटिनः. B$_2$ om. तेन पुनः. Ś K$_2$ ते च (for तेन). Ś$_1$ K$_2$ ससादिशः (sic); Ś$_2$ K$_4$ Dn$_1$ D$_{6.8}$ समाहताः (K$_4$ °दिशः; Dn$_1$ °दिनः; D$_6$ °दिताः D$_8$ °दितः) (for ससादिनः). K$_1$ किरीटिना तेम पुरः समादिशः (sic); T$_2$ किरीटिनातीव पुनस्तु कौरवाः. — (L. 4) Ś K V$_1$ B$_{3.5}$ Da$_1$ D$_{1.5.6.8}$ T$_2$ प्र(K$_3$ D$_6$ T$_2$ वि)भिन्नाः; D$_4$ निकृंताः (for निकृत्ताः). K$_4$ D$_8$ कुशलैर्; D$_2$ कुलिशा (for कुलिशैर्). — B$_5$ D$_6$ om. lines 5–8. — (L. 5) B$_1$ विक्रम्य (for कृष्णस्य). T$_2$ कृष्णस्यैतं पांचजन्यं च शंखं. — (L. 6) B$_2$ महांतमेतं; D$_{2.3.8}$ महार्हमेतं; T$_2$ विराजमानं (for महार्हमेतद्). Da$_1$ D$_5$ द्विजराजवर्णे; Dn$_1$ °रायवर्णं. Cc cites द्विजराजः. — (L. 7) T$_2$ वार्ष्णेयस्य (for कौन्तेय पश्य). — (L. 8) Ś$_1$ K$_2$ lacuna; Ś$_2$ तथा लसंति (for जाज्वल्यमानं). Ś$_2$ K$_3$ D$_8$ T$_2$ Cc विजयं (K$_3$ D$_8$ Cc °य-). T$_2$ रथं; Cc स्रजं (as above). — (L. 9) B$_2$ यथाग्र्यः (for र°). D$_2$ समुपेत्य (for °पैति). — (L. 10) T$_2$ वित्रासयन् (for विद्राव°). D$_8$ सैन्यरथं परेषां. — (L. 11) Ca.c cite असितः. Ś K D$_{2.8}$ रजतप्रयुक्तैर्; Da$_1$ D$_{1.5}$ असितप्रसुक्तैर्; T$_2$ असिपत्रयुक्तैर्; Cn असितप्रयुक्तैर् (as above). — (L. 12) D$_{1.8}$ महार्हैः. V$_1$ D$_8$ वरिष्ठैः (D$_8$ °ष्ठ). — K$_3$ lacuna for lines 13–15. — (L. 13) Ś K$_{1.2.4}$ D$_8$ रथा हयाः (for रथान्हयान्). Ś K$_{1.2.4}$ D$_4$ पत्तिगणाश्; D$_8$ °संघांश् (for °गणांश्). — (L. 14) Ś K$_{1.2.4}$ D$_8$ T$_2$ विदारिताः; V$_1$ विद्रावितान् (for विदारितान्). D$_6$ transp. पतन्त्यमी and यथा. Ś$_2$ तपंत्यमी. B$_5$ क्षुरैः; T$_2$ रथाः (for यथा). — (L. 15) Ś K$_{1.2}$ [अ]ग्रजेन (for [अ]र्जुनेन). D$_8$ अमरं तेजसा महा (sic); T$_2$ अमरतुल्यवर्चसा (for °राजतेजसा). — (L. 16) K$_1$ महाधनानि; Da$_1$ °बलीनि; D$_5$ °बलानि (for °वनानि). D$_8$ यथा हि; Ca.c सुपर्ण- (as above). — (L. 17) T$_1$ गतागतान् (for चतुःशतान्). K$_4$ रथोत्तमान्हतान्; B$_5$ D$_6$ T$_2$ रथान्निपातितान् (for रथानिमान्हतान्). — T$_2$ om. line 18. — (L. 18) Ś$_2$ सर्वाजितान् (for सवाजिसू°). — (L. 19) B$_2$ सप्तशतेन (for °शतानि). D$_8$ राजमार्गे पुरः सप्तशतानि सप्त दंतिनां (corrupt). — (L. 20) B$_5$ T$_2$ पदातिसंघा(T$_2$ °घां)श्. Ś K V$_1$ B$_{3.4}$ Da$_1$ D$_{1.5.8}$ T$_2$ हतान्; B$_5$ D$_5$ हया;

अयं समभ्येति तवान्तिकं बली
निघ्नन्कुरूंश्चित्र इव ग्रहोऽर्जुनः ।
समृद्धकामोऽसि हतास्तवाहिता
बलं तवायुश्च चिराय वर्धताम् ।

27

After 8.57.15, D6 T1.3 G M and Bom. ed. ins.:

धनुर्ज्या चन्द्रतारार्कपताका किङ्किणीयुता ।
पश्य कर्णार्जुनस्यैषा सौदामिन्यम्बरे यथा ।
एष ध्वजाग्रे पार्थस्य प्रेक्षमाणः समन्ततः ।
दृश्यते वानरो भीमो वीक्षतां भयवर्धनः ।
एतच्चक्रं गदा शङ्खः शार्ङ्गं कृष्णस्य च प्रभो । [5]
दृश्यते पाण्डवरथे वाहयानस्य वाजिनः ।
एतत्कूजति गाण्डीवं विकृष्टं सव्यसाचिना ।
एते हस्तवता मुक्ता घ्नन्त्यमित्रान्शिताः शराः ।
विशालायतताम्राक्षैः पूर्णचन्द्रनिभाननैः ।
एषा भूः कीर्यते राज्ञां शिरोभिरपलायिनाम् । [10]
एते परिघसंकाशाः पुण्यगन्धानुलेपनाः ।
उद्यता रणशौण्डानां पात्यन्ते सायुधा भुजाः ।
निरस्तजिह्वानेत्रान्ता वाजिनः सहसादिभिः ।
पतिताः पात्यमानाश्च क्षितौ क्षीणा विशेरते ।
एते पर्वतशृङ्गाणां तुल्या हैमवता गजाः । [15]
संछिन्नहस्ताः पार्थेन प्रपतन्त्यद्रयो यथा ।
गन्धर्वनगराकारा रथा हतनरेश्वराः ।
विमानानीव पुण्यान्ते स्वर्गिणां निपतन्त्यमी ।
व्याकुलीकृतमत्यर्थं पश्य सैन्यं किरीटिना ।
नानामृगसहस्राणां यूथं केसरिणा यथा । [20]

28

After 8.60.31, D6 S ins.:

आलोक्य तौ चैव परस्परं ततः
समं च शूरौ च ससारथी तदा ।
भीमोऽब्रवीद्याहि दुःशासनाय
दुःशासनो याहि वृकोदराय ।
तयो रथौ सारथिभ्यां प्रचोदितौ [5]
समं रथौ तौ सहसा समीयतुः ।
नानायुधौ चित्रपताकिनध्वजौ
दिवीव पूर्वं बलशक्रयो रणे ।
भीमः ।
दिष्ट्यासि दुःशासन अद्य दृष्ट
ऋणं प्रतीच्छेः सहवृद्धिमूलम् । [10]
चिरोदितं तं यन्मया ते सभायां

---

D3 महान् (for रथान्). — (L. 21) K2 om. from तवान्तिकं up to कामोऽसि in line 23. — (L. 22) Ś1 K3 कुरूंश्चैत्र इव; K1 °श्चैतु इव (sic); K4 °च्छेत इव (sic); Da1 D1.5 हंसश्चैत्र इव; D6.8 कुरून्केतुरिव; T2 °न्शुक्र इव (for कुरूंश्चित्र इव). — (L. 23) Ś K1 समृद्धि- (for समृद्ध-). T2 तवारयो (for °हिता) — (L. 24) V1 तथा (for तव). Ś K1.2.4 त्विरं विवर्धतां (for चिराय वर्ध°).

27

(L. 1) M3 damaged. D6 G1 M1 धनुर्ज्या. Bom. ed. चंद्रतारांका. D6 M1 -पताकां. D6 T1 G1 M1 किंकिणीयुतां. — (L. 2) M3 damaged. G1.2 सौदामनी. M1 सौदामिन्येव चांबरे (for the post. half). — (L. 4) D6 पश्यते (for दृश्यते). D6 M1 वीक्ष्यतां; G2 प्रेक्षतां; M3 विक्षतां; Bom. ed. वीराणां (for वीक्षतां). — (L. 5) D6 G1 M1 शंखं. M2-4 शार्ङ्गः. G2 शोभते; M1 च प्रभोः (for च प्रभो). — (L. 6) T1 M2.4 दृश्यंते. T1 वाहमानस्य; G2 वहमा°. G2 सादिनः (for वाजिनः). — (L. 7) D6 विसृष्टं. — (L. 8) G1 om. from the post. half up to line 16. T3 G3 हंति. M1 शत्रून् (for [अ]मित्रान्). T1 शरैः. — (L. 9) G2 -ताम्राक्षः and -निभाननः. M1 निकृत्तैः क्रूरकर्मणा (for the post. half). — (L. 10) G2 भाति मही (for भूः कीर्यते). — (L. 11) G2 -संघाशाः. M1 एते सुपरिघाकाराः (for the prior half). — (L. 12) D6 उद्धतां; T1 उद्यतां; T3 G3 उद्धता. D6 रणशूराणां. M1 उद्यतायुतशौंडीराः (for the prior half). T2 सायका भुजान् (for सायुधा भुजाः). — (L. 14) T3 G2 पातिताः. G3 [अ]च- (for वि-). — (L. 16) D6 संछिन्नभिन्नाः; T3 G3 °कुंभाः; M2-4 °गात्राः. M4 प्रतपंति. — (L. 17) T1 रथनागा; G1 राथाश्चापि (sic); G2 रथागत- (for रथा हत-). G1 हतेश्वराः (for -नरे°). — (L. 18) D6 विमाना इव; Bom. ed. °नादिव. M1 पुण्यानां (for पुण्यान्ते). M1 प्रणतंति (for निप°). — (L. 19) D6 त्वस्य (for पश्य). Bom. ed. परसैन्यं (for पश्य सैन्यं). — (L. 20) D6 T3 G1.3 केसरिणां. — After the above, D6 T1.3 G M repeat 8. 57.15 followed by 865*.

28

(L. 1) D6 तावेव; T2 तौ तत्र (for तौ चैव). — (L. 2) T1 ससारथिं; M2-4 स्वसारथी. — (L. 3) D6 सूतं समीपे (for दुःशासनाय). — (L. 4) M1 reads [अ]ब्रवीत् after दुःशासनो. — (L. 5) D6 सारथिसंप्रचोदितौ. — (L. 6) D6 G1 रणे रथौ; T1 महारथौ; G2 समौ रथौ (for समं रथौ). T1 M1.2.4 समेयतुः. — (L. 7) M1 नागायुधौ. G2 शस्त्र- (for चित्र-). T1.3 G2.3 -पताकिनौ; M2-4 -पताकिता (M4 °तं). D6 T2 G1 नानाविधच्छत्रपताकिनौ (T2 °कस-)ध्वजौ. — (L. 8) G1.2 बलिशक्रयो; M3 बलवृत्रयो. — (L. 9) D6 हि; T2 स; G2 [अ]द्य (for [अ]सि). D6 दुःशासनम्. T1 चाद्य. D6 T2 दृष्टम्. — (L. 10) T1.2 G1.2 रथं (for ऋणं). G1 प्रतिज्ञो (for प्रतीच्छेः). T1 -वद्धमूलं (for -वृद्धि°). D3 अमर्षणं प्रतीच्छेत्सहवृद्धमूलं — (L. 11) D6 T2 G1 M चिरोद्यतं (for °दितं). — (L. 12)

कृष्णाभिमर्शेन गृहाण मत्तः ।
स एवमुक्तस्तु ततो महात्मा
दुःशासनो वाक्यमुवाच वीरः ।
सर्वं स्मरे नैव च विस्मरामि [15]
उदीर्यमाणं शृणु भीमसेन ।
स्मरामि चात्मप्रभवं चिराय
यज्जातुषे वेश्मनि रात्र्यहानि ।
विश्वासहीना मृगयां चरन्तो
वसन्ति सर्वत्र निराकृतास्तु । [20]
महद्भयाद्रात्र्यहनि स्मरन्त-
स्तथोपभोगाच्च सुखाच्च हीनाः ।
वनेष्वटन्तो गिरिगह्वराणि
पाञ्चालराजस्य पुरं प्रविष्टाः ।
मायां यूयं कामपि संप्रविष्टा [25]
यतो वृतः कृष्णया फल्गुनो वः ।
संभूय पापैस्तदनार्यवृत्तं
कृतं तदा मातृकृतानुरूपम् ।
एको वृतः पञ्चभिः साभिपन्ना
ह्यलज्जमानैश्च परस्परस्य । [30]
स्मरे सभायां सुबलात्मजेन
दासीकृताः स्थ सह कृष्णया तु ।
संजयः ।
तेनैवमुक्तस्तु तवात्मजेन
सुबालचित्तेन वृकोदरोऽपि ।
प्रगृह्य चापं भृकुटीं ललाटे [35]
कृत्वा तु रोषोज्ज्वलताम्रनेत्रः ।

29

T1.2 ins. after 930* : Dn1 ins. after 8.61.2$^{ab}$ :

ततः क्रुद्धो भीमसेनस्तरस्वी
शक्तिं चोग्रां प्राहिणोत्ते सुताय ।
तामापतन्तीं सहसातिघोरां
दृष्ट्वा सुतस्ते ज्वलितामिवोल्काम् ।
आकर्णपूर्णैरिषुभिर्महात्मा [5]
चिच्छेद पुत्रो दशभिः पृषत्कैः ।
दृष्ट्वा तु तत्कर्म कृतं सुदुष्करं
प्रापूजयन्सर्वयोधाः प्रहृष्टाः ।
अथाशु भीमं च शरेण भूयो
गाढं स विव्याध सुतस्त्वदीयः । [10]
चुक्रोध भीमः पुनराशु तस्मै
भृशं प्रजज्वाल रुषाभिवीक्ष्य ।
विद्धोऽस्मि वीराशु भृशं त्वयाद्य
सहस्व भूयोऽपि गदाप्रहारम् ।
उक्त्वैवमुच्चैः कुपितोऽथ भीमो [15]
जग्राह तां भीमगदां वधाय ।
उवाच चाद्याहमहं दुरात्म-
न्पास्यामि ते शोणितमाजिमध्ये ।
अथैवमुक्तस्तनयस्तवोग्रां
शक्तिं वेगात्प्राहिणोन्मृत्युरूपाम् । [20]
आविध्य भीमोऽपि गदां सुघोरां
विचिक्षिपे रोषपरीतमूर्तिः ।
सा तस्य शक्तिं सहसा विरुज्य
पुत्रं तवाजौ ताडयामास मूर्ध्नि ।

---

D6 G3 ग्रहाण; T1 M1 तदद्य (for गृहाण). T1 गृह्य:; T2 मन्युं; M1 गृह्य (for मत्तः). — (L. 14) D6 T1 वाचमुवाच धीरः (for वाक्यमुवाच वीरः). — (L. 15) D6 G1.3 सर्वं स्मरन्नेव विस्(G1 न वि)स्मरामि. — (L. 16) D6 T1 वि(T1 ह्यु)दीर्यमाणं (for उदीर्य°). — (L. 19) T1 M1 चरंति. — (L. 20) D6 T1 G2 निराकृताश्च (T1 °ता. स्युः). — (L. 21) D6 T1.2 G महाभयं (T2 °या). D6 स्मरंते. — (L. 22) G2 M1 ततो (for तथा). D6 ततोपि भोगात्स्वसुखाच्च हीनाः; G1 ततोपभोगादवमत्य विहीनाः. — (L. 23) D6 वने वसंतो; G1 वनेष्वदंसो. — (L. 24) D6 G1 पांचालराज्ञश्च. G2 रिपुं (for पुरं). — (L. 25) D6 मत्वा (for मायां). D6 संप्रहृष्टा (for °विष्टा). M1 एको वृतः पंचभिः संप्रविष्टा. — (L. 26) D6 फाल्गुनो वा. — (L. 27.) D6 G1 स भूय (for संभूय). D6 G1 एवं; T2 चैवं (for पापैस्). — (L. 28) D6 कृतं यथा मातृकथानुरूपं. — T3 om. lines 29–36. — (L. 29) D6 वृकी वृकैः; T1.3 G2.3 एका वृता (for एको वृतः). G2 स्वाभिपंचा (sic) (for साभिपन्ना). — (L. 30) D6 om. हि. — (L. 32) D6 T1.2 G2 स्थः (for स्थ). G1 दासीकृता सह कृष्णा यदा तु. — T1.2 G3 M1 om. lines 33–36. — (L. 33) G1.2 इति (for तेन). — (L. 34) G1.2 पांडोः सुतः कोपवशं जगाम. — G1.2 om. lines 35–36. — (L. 35) M3 भ्रुकुटिं.

29

(L. 8) Dn1 प्रपूजयन्; T2 प्रपूजयंते. — After line 8, T1 reads App. I (No. 30) and T2 reads lines 1–4 of App. I (No. 30). — (L. 9) T2 अथो स भीमो स. — (L. 10) T2 हि (for स). — (L. 11) T2 चुक्रोश. — (L. 13) T2 धीराशु. — After line 16, T2 reads lines 17–24 of App. I (No. 30). — (L. 17) T2 अहो (for अहं). — (L. 19) T2 तथैवम् (for अथैवम्). Dn1 ततोग्रां. — (L. 20) Dn1 शक्तं. — (L. 22) T2 चिक्षेप रोषेण परीतमूर्तिः. — (L. 23) T2 विसृज्य (for विरुज्य).

30

$G_{1.2}$ M ins. after 8.61.2$^{ab}$: $T_1$ after line 8 of App. I (No. 29), $T_2$ ins. lines 1–4 after line 8 of App. I (No. 29), and lines 17–24 after line 16 of App. I (No. 29): $G_3$ after 929*:

स कार्मुकं गृह्य तु भारसाधनं
भीमस्तदा राजपुत्रं ह्यविध्यत्।
पञ्चाशता बाणगणैः स्तनान्तरे
तोत्त्रैर्यथातीव भिनद्विपेन्द्रम्।
ततोऽतिविद्धो विरथं महात्मा [5]
दुःशासनो भीमसेनं चकार।
निहत्य संख्ये चतुरोऽस्य वाहा-
न्छित्त्वा रथेषां पुनरेव चाक्षिपत्।
ततः क्षितिस्थो ह्यवरुह्य याना-
द्वृकोदरो गदया तस्य वाहान्। [10]
यमक्षयं प्रेषयित्वा महात्मा
रथं समाकर्षत राजसूनोः।
तस्मादवप्लुत्य रथात्ससर्ज
दुःशासनस्तोमरमुग्रवेगम्।
स तेन विद्धो ह्युरसि ह्यप्रमेयो [15]
गदां तस्मै विससर्जाप्रमेयाम्।
ततः क्रोधाद्भीमसेनः कृतानि
सर्वाणि दुःखान्यनुसंस्मरन्वै।
संस्मृत्य संस्मृत्य तथा प्रतिज्ञा-
मुग्रामथो राजपुत्रो न्यषीदत्। [20]
संचिन्तयन्रोषमतीव कोपा-
त्त्रयोदशाब्दं पुरुषप्रवीरः।
प्रगृह्य वज्राशनितुल्यवेगां
गदां करेणाथ वृकोदरो रुषा।
निपातयित्वा पृथिवीतले भृशं [25]
संताडयामास बली वृकोदरः।
अतीव संताडितभिन्नगात्रो
दुःशासनो वै निपपात भूमौ।
आक्रम्य कण्ठे युधि राजपुत्रं
संरक्तनेत्रो ह्यब्रवीद्धार्तराष्ट्रम्। [30]
तद्ब्रूहि किं त्वं परिमार्गमाणो
ह्यस्मान्पराभूय इहागतान्पुनः।
तदिदमद्य भृशसंभृतं मे
चिरार्जितं रोषमतिप्रदीप्तम्।
मधु प्रपास्ये तव कोष्ठभाजना- [35]
दित्यब्रवीद्भीमसेनस्तरस्वी।
दुःशासनं कण्ठदेशे प्रमृद्य
स्ततः क्रूरं भीमसेनश्चकार।
तं व्यंसयित्वा सहसा ससार
बलादसौ धार्तराष्ट्रस्तरस्वी। [40]
सपत्नतां दर्शयन्धार्तराष्ट्रे
भीमोऽभिदुद्राव सुतं त्वदीयम्।
मृगं मुहुः सिंहशिशुर्यथा वने

30

(L. 2) $T_1$ विविध्य; $G_3$ स विध्यत् (for ह्यवि°). — After line 2, $G_3$ ins.:

विचिक्षिपे तां यमदण्डसंनिभां
भीमो हि भीमां ज्वलितामिवोल्काम्।

— After the above, $G_3$ reads lines 23–24.
— (L. 4) $T_1$ $G_3$ इवाद्रिप्रतिमं; $G_2$ इवात्रिप्रतिमैर्; M यथात्रिः प्र($M_1$ °तीव्र)भिन्नं (for °तीव भिनद्). — $T_2$ om. lines 5–16. — (L. 5) $M_{1.2.4}$ ततो विद्धो. $T_1$ $G_{2.3}$ ततो विद्धो ($T_1$ °द्धं) विरथं तं महात्मा. — (L. 7) $T_1$ $G_1$ संख्ये; $G_3$ संघे (for संखे). $T_1$ $G_{1.2}$ हयांश्च (for ऽस्य वाहान्). — (L. 8) $M_1$ जित्वा (for छित्त्वा). $G_2$ $M_1$ रथैषां. $T_1$ चाच्छिनत् (for चाक्षिपत्). — (L. 9) $T_1$ $G_{2.3}$ क्षितौ तु ($T_1$ तं) (for क्षितिस्थो). $M_1$ ह्यवरुज्य (for °रुह्य). $G_3$ वाहाद् (for यानाद्). — (L. 15) $M_1$ विध्वो. $T_1$ ह्युरस्य; $M_{2.4}$ उरसि (for ह्युरसि). — (L. 16) $T_1$ $M_1$ अस्मै (for तस्मै). $M_1$ प्रससर्ज (for विस°). — $T_2$ reads lines 17–24 after line 16 of App. I (No. 19). — (L. 18) $T_1$ च; $M_1$ अति- (for अनु-). — (L. 20) M असौ (for अथो). $T_1$ $M_1$ राजपुत्रे. $G_{2.3}$ व्यषीदत् (for न्यषी°). — (L. 21) $M_3$ partly damaged. $T_1$ संचिन्त्य तं; $G_{2.3}$ °चिंतितं; $M_{1.2.4}$ तत्संचितं (for संचिन्तयन्). $G_{2.3}$ वेगात् (for कोपात्). — $T_1$ $G_2$ $M_1$ om. line 23. $G_3$ reads lines 23–24 after the insertion following line 2. — After line 23, $M_{2-4}$ ins.:

समापतन्तीं ज्वलितामिवोल्काम्।

— (L. 24) $G_{2.3}$ शरेण; $M_1$ परेण (for करेण). — $T_2$ om. lines 25–53. — After line 25, $T_1$ $G_{2.3}$ ins.:

आदाय दुःशासनमुग्रवेगम्।

— (L. 26) $M_1$ स ताडयामास. — (L. 27) $T_1$ संताडनभिन्नगात्रो; $G_1$ संताडितभिन्नगात्रैर्. — After line 28, $M_{2-4}$ read lines 42–47. — (L. 30) $G_1$ मुवि; $G_3$ $M_{2-4}$ अब्रवीद् (for ह्यब्र°). $G_2$ संरक्तो **ब्रवीद्. — (L. 31) $T_1$ $M_1$ यद् (for तद्). $M_{2-4}$ यत्त्वं (for किं त्वं). $G_1$ परिमार्ग्यमाणो. — (L. 32) $G_1$ M om. हि. $T_1$ समागतान्; $G_{2.3}$ इहागतः (for °गतान्). — (L. 33) $T_1$ तदेदमद्य; G अ($G_3$ आ)दीपयत्तद्. $T_1$ भृशसंमितं; $G_{1.3}$ °दीपितं; $G_2$ °पीडितं (for °संभृतं). — (L. 34) $M_{2-4}$ अदीपयत्ते (for अतिप्रदीप्तम्). — (L. 35) $T_1$ कृष्णभाजनाद् (for कोष्ठ°). — $T_1$ M om. lines 36–37 and 39–40. G transp. lines 41 and 42. — (L. 41) $G_{1.3}$ सपत्नतान्. — (L. 42) $T_1$ $M_{2.4}$ विदुद्राव; $G_1$ $M_1$ [ऽ]पि दु° (for ऽभिदु°). — (L. 43) $M_1$ तथा; $M_{2-4}$ यथा (for मुहुः).

तथाश्वभिद्रुत्य महाबलं बली ।
निगृह्य चैनं परमेण कर्मणा [45]
उत्क्षिप्य चोत्क्षिप्य च तूर्णमेनम् ।
भूमौ तदा निष्पिपेषाथ वीरः
असिं विकोशं विमलं चकार ।
कण्ठे समाक्रम्य च वेपमानं
कृत्वा तु रूपं परमं सुघोरम् । [50]
कालान्तकाभ्यां प्रतिमं तदानीं
विदार्य वक्षः स महारथस्य ।
दुःशासनस्य रिपुशासनस्य

31

After 8. 61. 5^ab, K4 V1 B D (except D2.3) ins.:

तस्मिन्सुघोरे तुमुले वर्तमाने
प्रधानभूयिष्ठतरैः समन्तात् ।
दुःशासनं तत्र समीक्ष्य राज-
न्भीमो महाबाहुरचिन्त्यकर्मा ।
स्मृत्वाथ केशग्रहणं च देव्या [5]
वस्त्रापहारं च रजस्वलायाः ।
अनागसो भर्तृपराङ्मुखाया
दुःखानि दत्तान्यपि विप्रचिन्त्य ।
जज्वाल क्रोधामर्षेण भीम
आज्यप्रसिक्तो हि यथा हुताशः । [10]
तत्राह कर्णं च सुयोधनं च
कृपं द्रौणिं कृतवर्माणमेव ।
निहन्मि दुःशासनमद्य पापं
संरक्ष्यतामद्य समस्तयोधाः ।
इत्येवमुक्त्वा सहसाभ्यधाव- [15]
न्निहन्तुकामोऽतिबलस्तरस्वी ।
तथा तु विक्रम्य रणे वृकोदरो
महागजं केसरिणो यथैव ।
निगृह्य दुःशासनमेकवीरः
सुयोधनस्याधिरथेः समक्षम् । [20]

32

After 8. 61. 6^ab, K4 D2 (lines 9–10 only) T2 ins.:

ये राजसूयावभृथे पवित्रा
जाताः कचा याज्ञसेन्या दुरात्मन् ।
ते पाणिना कतरेणावकृष्टाः
प्रब्रूहि त्वां पृच्छते भीमसेनः ।
उक्तस्तथाजौ स तदा सरोषं [5]
जगाद भीमं परिवृत्य नेत्रे ।

---

T1 महावने (for यथा वने). — (L. 44) T1 तदाभ्यभिद्रुत्य; M1 तम*भि°; M2–4 तमप्यभि° (for तथाश्वभि°). G1 तं (for बली). — (L. 46) T1 चोत्क्षिप्य; G1 ह्युत्क्षिप्य (for उत्क्षिप्य). M1 मोहाक्राम्य; M2–4 चोद्भ्राम्य (for चोत्क्षिप्य). — (L. 47) G [आ]शु (for [अ]थ). G3 वीर. — (L. 50) G1 [अ]तुरूपं; M1 स्वरूपं (for तु रूपं). M सुरौद्रं (for सुघोरम्). T1 कृत्वा रूपं परमं वै सुघोरं. — (L. 51) T1 प्रतिमस्. — (L. 53) M रिपुनाशनस्य.

31

(L. 1) K4 V1 B3.5 Da1 D3.4.6 घोरे (for सुघोरे). K4 प्राधान- (for प्रधान-). — (L. 5) K4 V1 B (except B3) Da1 D1.3.5.6 च; D7 स (for [अ]थ). K4 प्रियाया (for च देव्या). — (L. 8) K4 संप्रचिंत्य (for विप्र°). — After line 8, D6 ins.:

संस्मृत्य संस्मृत्य तथा प्रतिज्ञा-
मुमामथो राजपुत्रो न्यषीदत् ।
ततः स्थितं रोषमतीव कोपा-
त्त्रयोदशाब्दं पुरुषप्रवीरः ।
प्रभद्रकान्सृञ्जयसोमकांश्च [5]
कारूपकाशीश्वरमद्रकांश्च ।
पाण्डुप्रवीरानवदत्कुरूंश्च
दुःशासनं रक्षथ मद्गृहीतम् ।

— D6 om. lines 9–10. — (L. 9) K4 क्रोधामर्षिणे; B1 क्रोधावमर्षेण; B3.5 कोपामर्षेण (for क्रोधा°). — (L. 10) V1 Da1 D1.5 आज्यप्रसिक्तेन (V1 °श्र); B2 प्राज्यप्रसिक्तो हि (for आज्यप्र°). V1 हुताशनः. — (L. 12) V1 B3 कृपं च (for कृपं). — (L. 14) K4 V1 B1.2 Dn1 D3.6.7 संरक्ष(V1 °क्ष्यं)-ताम्. Da1 D1.5 शक्र(Da1 °क्त्य्र)श्चियोधाः (sic) (for समस्त°). — After line 14, D4 (marg.) ins.:

स क्षत्रियः कोऽपि भवेत्पराक्रमी
यो मोचयेदेनमसह्यविक्रमात् ।
तदाह पार्थोऽपि रथाङ्गपाणिं
किं मारुतिर्वक्ष्यते वासुदेव ।
अथाह कृष्णोऽपि धनंजयं सय- [5]
न्न वायुपुत्रः शिवरूप एव ।

while D6 ins. after line 14:

तत्राह कृष्णं च धनंजयं च
शिखण्डिनं धृष्टद्युम्नं यमौ च ।
पाञ्चालमत्स्यांश्च सकैकयांश्च
दुःशासनं रक्षथ मद्गृहीतम् ।

— (L. 16) V1 [ऽ]तिवली; Da D1.5 °वलं (for °बलस्). — (L. 18) B1.4 महागजान्. B3 Dn1 केसरिको. V1 महागजं सिंह इवातिदृप्तः; B2 महागजं केशरीवोग्रवेगः — (L. 19) B2 एकवीरं.

32

(L. 1) K4 यो (for ये). T2 पवित्रिता. — (L. 4) T2 तं ब्रूहि (for प्रब्रूहि). — (L. 5) K4 उक्तः. T2 सततं (for स तदा). — (L. 6) T2 जगाद नेत्रे परिवृत्य भीमः. — With

